तदर्हसि विशालाक्ष हृदयेऽपि पराङ्मुखे ।
रूपस्यास्यानुरूपेण दाक्षिण्येनानुवर्तितुम् ।।

*Buddhacarita* IV. 69

इति श्रुत्वा वचस्तस्य श्लक्ष्णमागमसंहितम् ।
मेघस्तनितनिर्घोषः कुमारः प्रत्यभाषत ।।

ibid. 83

उपपन्नमिदं वाक्यं सौहार्दव्यञ्जकं त्वयि ।
अत्र च त्वानुनेष्यामि यत्र मा दुष्ठु मन्यसे ।।

ibid. 84

नावजानामि विषयान् जाने लोकं तदात्मकम् ।
अनित्यं तु जगन्मत्वा नात्र मे रमते मनः ।।

ibid. 85

जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयम् ।
ममापि हि मनोज्ञेषु विषयेषु रतिर्भवेत् ।।

ibid. 86

नित्यं यद्यपि हि स्त्रीणामेतदेव वपुर्भवेत् ।
दोषवत्स्वपि कामेषु कामं रज्येत मे मनः ।।

ibid. 87

## THE PRINCE STRUCK BY NIRVĀṆA-ŚABDA

### निर्वाणशब्दश्रवणम्

[सा मृगी शाक्यकन्या कुमारं तादृशीये लक्ष्मीये तादृशाये विभूषाये कपिलवस्तुतो निर्यान्तं दृष्ट्वा गाथाहि अभिस्तवति ।]

निर्वृता खलु ते माता पिता पुनः ते निर्वृतो ।
निर्वृता पुनः सा नारी यस्य भर्ता भविष्यसि ।।

[बोधिसत्त्वस्य निर्वाणशब्दं श्रुत्वा निर्वाणस्मिं एव मनं प्रसीदे तिष्ठे संप्रस्कन्दे ।]

निर्वाणघोषं श्रुत्वान निर्वाणे श्रोत्रमाददे ।
निर्वाणमनुत्तरं दृष्ट्वा ध्यायते अकुतोभयम् ।।

*Mahāvastu* II. 157

## GODS' IMPLORATION TO RETIRE

### अभिनिष्क्रमणाध्येषणम्

ये सत्त्वाग्रा दशदिग्लोके तेषु विशेषात्तत्र रतितुरियैः ।
गाथा गीता इम रतिमधुरा संचोदेन्ती नरवरप्रवरम् ।।

पूर्वि तुभ्यं अयु कृतु प्रणिधी दृष्ट्वा सत्त्वान्दुःखशतभरितान् ।
लेनं त्राणं जगनिजशरणे भेष्ये नाथु हितकरु परमः ।।

साधो वीरा स्मर चरि पुरिमां या ते आसीज्जगहितप्रणिधिः ।
कालो वेला अयु तव समयो निष्क्रम्याही ऋषिवरप्रवरा ।।

*Lal. Vis.* 161

कृत त्वयि हितकर बहुगुण जनतो
निजिनितु जिनगुण विचरति गतिषू ।
स्मर स्मर पुरिमक व्रततपचरण
लघु व्रज द्रुमवरु स्पृश पदममृतम् ।।

ibid. 165

त्यजि त्वयि पुरि भवि धनमणिकनका
सखि प्रियसुत महि सनगरनिगमा ।
शिरमपि त्यजि स्वकु करचरनयना
जगति य हितकरु जिनगुणनिरता ।।

ibid.

पुरि तुम नृपसुत ऋषिवरु यदभू
छिनि तव तनुरुह कलिनृपु रुषितो ।

क्ृत त्वयि कुलक्रिय न च मनु क्षुभितो
पयु तव स्रवि तद करतलचरणैः ।।

*Lal. Vis.* 165-166

स्मरु पुन ऋषिसुतु त्वयि पुरि यदभू
व्रतरतु गुरुभरु गिरिवरनिलये ।
हृत भव नृपतिन विषकृत इषुणा
कृप तव तहि नृप न च मनु क्षुभितो ।।

ibid. 166

पुरि तुम नरवर त्यजि सुतु यदभू
मणि तव प्रपतितु जलधरि विपुले ।
च्यवयितु क्षपयितु त्वय महउदधिं
लभि तद धनमणि दृढबल वृषभी ।।

ibid.

पुरि तुम सुपुरुष ऋषिवरु यदभू
द्विज तव उपगतु भव मम शरणम् ।
भणि ऋषि द्विजवर मम रिपुउपने
त्यजि त्वय स्वकि तनु न च द्विज त्यजसे ।।

ibid.

स्मरु ऋषि उपगतु पुरि द्रुमनिलये
रुचि भणि तरुरुह कति इम गणये ।
सुविदित सुगणित यथ तहि किशला
तथ तव अवितथ समगिर रचिता ।।

ibid.

इति तव असदृश व्रततपचरणा
बहुगुण गुणधर गुणपथि चरतो ।
त्यजि महि सनगरि अयु तव समयो
लघु जगु स्थपयहि जिनगुणचरणे ।।

ibid. 167

## BODHIPAKṢIYA & OTHER DHARMAS

### बोधिलाभधर्मसंगीतिः

उदारछन्देन च आशयेन अध्याशयेना करुणाय प्राणिषु ।
उत्पद्यते चित्तु वराग्रबोधये शब्दे च रूपस्तुरियेभि निश्चरी ।।

*Lal. Vis.* 182

श्रद्धा प्रसादो अधिमुक्ति गौरवं निर्मानता ओनमना गुरूणाम् ।
परिपृच्छना किंकुशलंगवेषणा अनुस्मृतीभावनु शब्द निश्चरी ।।

ibid.

दाने दमे संयमशीलशब्दः क्षान्तीय शब्दस्तथ वीर्यशब्दः ।
ध्यानाभिनिर्हारसमाधिशब्दः प्रज्ञा उपायस्य च शब्द निश्चरी ।।

ibid. 183

मैत्राय शब्दः करुणाय शब्दो मुदिता-उपेक्षाय अभिज्ञशब्दः ।
चतुसंग्रहावस्तुविनिश्चयेन सत्त्वान परिपाचनशब्द निश्चरी ।।

ibid.

स्मृतेरुपस्थानप्रभेदशब्दः सम्यक्प्रहाणास्तथ ऋद्धिपादा ।
पञ्चेन्द्रिया पञ्चबलप्रभेदा बोध्यङ्गशब्दस्तुरियेभि निश्चरी ।।

ibid.

अष्टाङ्गिको मार्गबलप्रभेदः शमथस्य शब्दोऽथ विपश्यनायाः ।
अनित्यदुःखार्त्तिअनात्मशब्दः अशुभार्त्तिशब्दो तुरियेभि निश्चरी ।।

ibid. 183

विरागशब्दश्च विवेकशब्दः क्षयज्ञानशब्दो अनुत्पादशब्दः ।
अनिरोधशब्दश्च अनालयं च निर्वाणशब्दस्तुरियेभि निश्चरी ।।

ibid.

इम एवरूपास्तुरियेभि शब्दः संबोधिशब्दश्चनुभाव निश्चरी ।
यं श्रुत्व सर्वा प्रमदा नु शिक्षिता वराग्रसत्त्वे प्रणिधेन्ति बोधये ।।

ibid

## FATHER'S CONSENT TO RETIREMENT

### निष्क्रमणाय पितुरनुज्ञानम्

सो च स्थिहित्व पुरतो नृपतिं अवोचत्
मा भूयु विघ्न प्रकरोहि म चैव खेदम्।
नैष्क्रम्यकालसमयो मम देव युक्तो
हन्त क्षमस्व नृपते सजनः सराष्ट्रः।।

*Lal. Vis.* 199

तं अश्रुपूर्णनयनो नृपती बभाषे
किंचित्प्रयोजनु भवेद्विनिवर्तने ते।
किं याचसे मम वरं वद सर्वु दास्ये
अनुगृह्ण राजकुलु मां च इदं च राष्ट्रम्।।

ibid.

तद बोधिसत्त्व अवची मधुरप्रलापी
इच्छामि देव चतुरो वर तान् मि देहि।
यदि शक्यसे ददितु मह्य वसे ति तत्र
तद् द्रक्ष्यसे सद गृहे न च निष्क्रमिष्ये।।

ibid.

यौवने वर्तमानस्मिं जरा मे मा खु आगमे।
आरोग्ये वर्तमानस्मिं व्याधि मे मा खु आगमे।।

*Mahāvastu* II. 141

जीविते वर्तमानस्मिं मरणं मा खु आगमे।
संपत्तीषु रमियासु विपत्ति मा खु आगमे।।

ibid.

ततो शुद्धोदनो राजा दुःखशल्यसमर्पितः।
अश्रुपूर्णेहि नेत्रेहि बोधिसत्त्वमिदमब्रवीत्।।

ibid.

स्वयं हि पुत्र जानाहि कस्य एतं न विद्यति।
जरा व्याधि मरणं च विपत्तीर्वा न मे गतिः।।

ibid.

यदि कायो करण्डसमो न भवेत्
यदि वा तत्र सर्पसमा न भवे।
यदि स्कन्ध अमित्रसमा न भवे
अथ किस्य ममातु रतिर्न भवेत्॥

*Mahāvastu* II. 149

## REPELLING HAREM-CONDITION

## अन्तःपुरदर्शन-वितृष्णा

तत उत्तममुत्तमाङ्गनास्तं निशि तूर्यैरुपतस्थुरिन्द्रकल्पम्।
हिमवच्छिरसीव चन्द्रगौरे द्रविणेन्द्रात्मजमप्सरोगणौघाः॥

*Buddhacarita* V. 45

इति सत्त्वकुलान्वयानुरूपं विविधं स प्रमदाजनः शयानः।
सरसः सदृशं बभार रूपं पवनावर्जितरुग्नपुष्करस्य॥

ibid 62

समवेक्ष्य तथा तथा शयाना विकृतास्ता युवतीरधीरचेष्टाः।
गुणवद्वपुषोऽपि वल्गुभाषा नृपसूनुः स विगर्हयांबभूव॥

ibid. 63

अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः।
वसनाभरणैस्तु वञ्च्यमानः पुरुषः स्त्रीविषयेषु रागमेति॥

ibid. 64

विमृशेद्यदि योषितां मनुष्यः प्रकृतिं स्वप्नविकारमीदृशं च।
ध्रुवमत्र न वर्धयेत्प्रमादं गुणसंकल्पहतस्तु रागमेति॥

ibid. 65

इति तस्य तदन्तरं विदित्वा निशि निश्चिक्रमिषा समुद्बभूव।
अवगम्य मनस्ततोऽस्य देवैर्भवनद्वारमपावृतं बभूव॥

ibid. 66

## CONVERSATION WITH CHANDAKA

### छन्दक-संलापः

छन्दका चपलु मा विलम्बहे अश्वराज दद मे अलंकृतम् ।
सर्वसिद्धि मम एति मङ्गला अर्थसिद्धि ध्रुवमद्य भेष्यते ।।

Lal. Vis. 210

अथ छन्दक एवमाह ।
क्व गमिष्यसे विकसितभ्रू कमलदल शुभलोचन ।
नृपसिंह शरदिन्दुपूर्ण कुमुदशशाङ्कमुदिता ।।

ibid.

नवनलिनकोमलविबुद्धपद्मवदना ।
हाटकसुधान्तरवितरुणविमलशशितेज ।
घृतहुतार्चिरग्निमणिविद्युत्प्रभोज्ज्वलिततेजो ।
वारणमत्तलीलगजगामी ।
गोवृषमृगेन्द्रहंसक्रम सुक्रमा सुचरणा ।।

ibid.

बोधिसत्त्व आह ।
छन्दक यस्य अर्थि मयि पूर्व त्यक्त करचरणनयन ।
तथ उत्तमाङ्ग तनय भार्य प्रियाश्च राज्यधनकनकवसन ।
रत्नपूर्ण गजतुरगानिलजववेग विक्रमबलाः ।।
शीलु मि रक्षि क्षान्तिपरिभावि ।
वीर्यबलध्यानप्रज्ञानिरतश्चास्मि बहुकल्पकोटिनयुता ।
किं तु स्पृशित्व बोधिशिवशान्तिम् ।
जरामरणपञ्जरनिरष्टसत्त्वपरिमोचनस्य समयोऽभ्युपस्थितु मम ।।

ibid.

विवर्जिता सर्पशिरो यथा बुधैः विगर्हिता मीढघटो यथाशुचिः ।
विनाशका सर्वशुभस्य छन्दका ज्ञात्वा हि कामान्न मि जायते रतिः ।।

ibid. 213

छन्दक श्रृणु यानि दुःखाशतार्मर्पिता पूर्वि जन्मान्तरे।
बन्धना रुन्धना ताडना तर्जना कामहेतोर्मया।
नो च निर्विण्णभूत् संस्कृते मानसम्॥
प्रमदवशगतं स मोहाकुलं दृष्टिजालावृतं अन्धभूतं पुरा।
आत्मसंज्ञाग्रहाकारका वेदनावीतिवृत्ता इमे धर्म अज्ञानतः॥
संभूता चपलचलऽनित्य मेघैः समा विद्युभिः सदृशाः।
ओसबिन्दूपमा रिक्ततुच्छा असारा अनात्मा च शून्यस्वभावा इमे सर्वशः॥

न च मम विषयेषु संरज्यते मानसं
देहि मे छन्दका कण्ठकालंकृतं अश्वराजोत्तमम्।
पूर्ण मे मङ्गला ये पुरा चिन्तिता
भेष्यि सर्वाभिभूः सर्वधर्मेश्वरो धर्मराजो मुनिः॥

*Lal. Vis.* 213-14

श्रृणु छन्दक मह्य निश्चयं मोक्षसत्त्वार्थ हितार्थसुद्यतम्।
अचलाचलमव्ययं दृढं मेरुराजेव यथा सुदुश्चलम्॥

ibid. 216

छन्दक आह। कीदृश आर्यपुत्रस्य निश्चयः॥

ibid.

बोधिसत्त्व आह।

वज्राशनिः परशुशक्तिशराश्च वर्षे
विद्युत्प्रतानज्वलितः क्वथितं च लोहम्।
आदीप्तशैलशिखरा प्रपतेयु मूर्ध्नि
नैवा अहं पुन जनेय गृहाभिलाषम्॥

ibid.

प्रतिगृह्य ततः स भर्तुराज्ञां विदितार्थोऽपि नरेन्द्रशासनस्य।
मनसीव परेण चोद्यमानस्तुरगस्यानयने मतिं चकार॥

*Buddhacarita* V. 71

अथ हेमखलीनपूर्णवक्त्रं लघुशय्यास्तरणोपगूढपृष्ठम्।
बलसत्त्वजवान्वयोपपन्नं स वराश्वं तमुपानिनाय भर्त्रे॥

ibid. 72

प्रततत्रिकपुच्छमूलपार्ष्णिं निभृत-ह्रस्वतनूजपुच्छकर्णम् ।
विनतोन्नतपृष्ठकुक्षिपार्श्वं विपुलप्रोथललाटकटचुरस्कम् ।।

*Buddhacarita* V. 73

उपगुह्य स तं विशालवक्षाः कमलाभेन च सान्त्वयन् करेण ।
मधुराक्षरया गिरा शशास ध्वजिनीमध्यमिव प्रवेष्टुकामः ।।

ibid. 74

बहुशः किल शत्रवो निरस्ताः समरे त्वामधिरुह्य पार्थिवेन ।
अहमप्यमृतं पदं यथावत्तुरगश्रेष्ठ लभेय तत्कुरुष्व ।

ibid. 75

सुलभाः खलु संयुगे सहाया विषयावाप्तसुखे धनार्जने वा ।
पुरुषस्य तु दुर्लभाः सहायाः पतितस्यापदि धर्मसंश्रये वा ।।

ibid. 76

## LAMENTATION OF GOPĀ AND OTHERS

### गोपादीनां विलापः

गोपा विबुद्धा तथ अपि इस्त्रिगारा
शयनं निरीक्षी न च दृशि बोधिसत्त्वम् ।
उत्क्रोशु मुक्तो नरपतिनो अगारे
हा वञ्चिताः स्मः कहि गतु बोधिसत्त्वो ।।

*Lal. Vis.* 230

राजा श्रुणित्वा धरणितले निरस्तो
उत्क्रोशु कृत्वा अहो मम एकपुत्रो ।
सो स्तेमितो ही जलघटसंप्रसिक्तो
आश्वासयन्ती बहुशत शाकियानाम् ।।

ibid.

गोपा शयातो धरणितले निपत्य
केशां लुनाती अवशिरि भूषणानि ।

अहो सुभाष्टं मम पुरि नायकेना
सर्वप्रियेभिर्नचिरतु विप्रयोगः ।।

*Lal. Vis.* 230

रूपा सुरूपा विमलविचित्रिताङ्गा
अच्छा विशुद्धा जगति प्रिया मनापा ।
धन्या प्रशस्ता दिवि भुवि पूजनीया
क्व त्वं गतोऽसि मम शयि छोरयित्वा ।।

ibid.

न पास्यि पानं न च मधु न प्रमादं
भूमौ शयिष्ये जटमकुटं धरिष्ये ।
स्नानं जहित्वा व्रततप आचरिष्ये
यावन्न द्रक्ष्ये गुणधरु।बोधिसत्त्वम् ।।

ibid.

ततः सबाष्पा महिषी महीपतेः
प्रनष्टवत्सा महिषीव वत्सला ।
प्रगृह्य बाहू निपपात गौतमी
विलोलपर्णा कदलीव काञ्चनी ।।

*Buddhacarita* VIII. 24

हतत्विषोऽन्याः शिथिलांसबाहवः
स्त्रियो विषादेन विचेतना इव ।
न चुक्रुशुर्नाश्रु जहुर्न शश्वसु-
र्न चेलुरासुर्लिखिता इव स्थिताः ।।

ibid. 25

अधीरमन्याः पतिशोकमूर्छिता
विलोचनप्रस्रवणैर्मुखैः स्त्रियः ।
सिषिञ्चिरे प्रोषितचन्दनान् स्तनान्
धराधरः प्रस्रवणैरिवोपलान् ।।

ibid. 26

ततस्तु रोषप्रविरक्तलोचना विषादसंबन्धिकषायगद्गदम् ।
उवाच निश्वासचलत्पयोधरा विगाढशोकाश्रुधरा यशोधरा ।।

*Buddhacarita* VIII. 31

निशि प्रसुप्तामवशां विहाय मां
गतः क्व स च्छन्दक मन्मनोरथः ।
उपागते च त्वयि कन्थके च मे
समं गतेषु त्रिषु कम्पते मनः ।।

ibid. 32

अनार्यमस्निग्धममित्रकर्म मे नृशंस कृत्वा किमिहाद्य रोदिषि ।
नियच्छ बाष्पं भव तुष्टमानसो न संवदत्यश्रु च तच्च कर्म ते ।।

ibid. 33

विगर्हितुं नार्हसि देवि कन्थकं
न चापि रोषं मयि कर्तुमर्हसि ।
अनागसौ स्वः समवेहि सर्वशो
गतो नृदेवः स हि देवि देववत् ।।

ibid. 43

तदेवमावां नरदेवि दोषतो
न तत्प्रयातं प्रति गन्तुमर्हसि ।
न कामकारो मम नास्य वाजिनः
कृतानुयात्रः स हि दैवतैर्गतः ।।

ibid. 49

अभागिनी नूनमियं वसुन्धरा
तमार्यकर्माणमनुत्तमं पतिम् ।
गतस्ततोऽसौ गुणवान् हि तादृशो
नृपः प्रजाभाग्यगुणैः प्रसूयते ।।

ibid. 54

शुचौ शयित्वा शयने हिरण्मये प्रबोध्यमानो निशि तूर्यनिस्वनैः ।
कथं बत स्वप्स्यति सोऽद्य मे व्रती पटैकदेशान्तरिते महीतले ।।

ibid. 58

स मामनाथां सहधर्मचारिणी-
मपास्य धर्मं यदि कर्तुमिच्छति ।
कुतोऽस्य धर्मः सहधर्मचारिणीं
विना तपो यः परिभोक्तुमिच्छति ।।

*Buddhacarita* VIII. 61

न खल्वियं स्वर्गसुखाय मे स्पृहा
न तज्जनस्यात्मवतोऽपि दुर्लभम् ।
स तु प्रियो मामिह वा परत्र वा
कथं न जह्यादिति मे मनोरथः ।।

ibid. 66

अभागिनी यद्यहमायतेक्षणं
शुचिस्मितं भर्तुरुदीक्षितुं मुखम् ।
न मन्दभाग्योऽर्हति राहुलोऽप्ययं
कदाचिदङ्के परिवर्तितुं पितुः ।।

ibid. 67

## FOREST-ENTRY

## तपोवन-प्रवेशः

ततो विसृज्याश्रुमुखं रुदन्तं छन्दं वनच्छन्दतया निरास्थः ।
सवार्थसिद्धो वपुषाभिभूय तमाश्रमं सिद्ध इव प्रपेदे ।।

ibid. VII. 1

स राजसूनुर्मृगराजगामी मृगाजिरं तन्मृगवत्प्रविष्टः ।
लक्ष्मीवियुक्तोऽपि शरीरलक्ष्म्या चक्षूंषि सर्वाश्रमिणां जहार ।।

ibid. 2

कीर्णं तथा पुण्यकृता जनेन स्वर्गाभिकामेन विमोक्षकामः ।
तमाश्रमं सोऽनुचचार धीरस्तपांसि चित्राणि निरीक्षमाणः ।।

ibid. 10

दुःखात्मकं नैकविधं तपश्च
स्वर्गप्रधानं तपसः फलं च ।
लोकाश्च सर्वे परिणामवन्तः
स्वल्पे श्रमः खल्वयमाश्रमाणाम् ।।

*Buddhacarita* VII. 20

प्रियांश्च बन्धून् विषयांश्च हित्वा ये स्वर्गहेतोर्नियमं चरन्ति ।
ते विप्रयुक्ताः खलु गन्तुकामा महत्तरं बन्धनमेव भूयः ।।

ibid. 21

यतः शरीरं मनसो वशेन प्रवर्तते चापि निवर्तते च ।
युक्तो दमश्चेतस एव तस्माच्चित्तादृते काष्ठसमं शरीरम् ।।

ibid. 27

आहारशुद्ध्या यदि पुण्यमिष्टं
तस्मान्मृगाणामपि पुण्यमस्ति ।
ये चापि बाह्याः पुरुषाः फलेभ्यो
भाग्यापराधेन पराङ्मुखार्थाः ।।

ibid. 28

यज्ञैस्तपोभिर्नियमैश्च तैस्तैः स्वर्गं यियासन्ति हि रागवन्तः ।
रागेण सार्धं रिपुणेव युद्ध्वा मोक्षं परीप्सन्ति तु सत्त्ववन्तः ।।

ibid. 53

तद्बुद्धिरेषा यदि निश्चिता ते तूर्णं भवान् गच्छतु विन्ध्यकोष्ठम् ।
असौ मुनिस्तत्र वसत्यराडो यो नैष्ठिके श्रेयसि लब्धचक्षुः ।।

ibid. 54

## UDĀYI'S PERSUASION

### उदायिनोऽनुनयः

तं वृक्षमूलस्थमभिज्वलन्तं पुरोहितो राजसुतं बभाषे ।
यथोपविष्टं दिवि पारिजाते बृहस्पतिः शक्रसुतं जयन्तम् ।।

ibid. IX. 12

त्वच्छोकशल्ये हृदयावगाढे मोहं गतो भूमितले मुहूर्तम्।
कुमार राजा नयनाम्बुवर्षो यत्त्वामवोचत्तदिदं निबोध।।

*Buddhacarita* IX. 13

जानामि धर्मं प्रति निश्चयं ते परैमि ते भाविनमेतमर्थम्।
अहं त्वकाले वनसंश्रयात्ते शोकाग्निनाग्निप्रतिमेन दह्ये।।

ibid. 14

शोकाम्भसि त्वत्प्रभवे ह्यगाधे
दुःखार्णवे मज्जति शाक्यराजः।
तस्मात्तमुत्तारय नाथहीनं
निराश्रयं मग्नमिवार्णवे नौः।।

ibid. 24

हंसेन हंसीमिव विप्रयुक्तां त्यक्तां गजेनेव वने करेणुम्।
आर्तां सनाथामपि नाथहीनां त्रातुं वधूमर्हसि दर्शनेन।।

ibid. 27

एकं सुतं बालमनर्हदुःखं संतापमन्तर्गतमुद्वहन्तम्।
तं राहुलं मोक्षय बन्धुशोकाद्राहूपसर्गादिव पूर्णचन्द्रम्।।

ibid 28.

यो निश्चयो धर्मविधौ तवायं
नायं न युक्तो न तु कालयुक्तः।
शोकाय दत्त्वा पितरं वयःस्थं
स्याद्धर्मकामस्य हि ते न धर्मः।।

ibid. 53

ततो वचस्तस्य निशम्य मन्त्रिणः
प्रियं हितं चैव नृपस्य चक्षुषः।
अनूनमव्यस्तमसक्तमद्रुतं
धृतौ स्थितो राजसुतोऽब्रवीद्वचः।।

ibid. 72

इहास्ति नास्तीति य एष संशयः
परस्य वाक्यैर्न ममात्र निश्चयः।

अवेत्य तत्त्वं तपसा शमेन च
स्वयं ग्रहीष्यामि यदत्र निश्चितम् ।।

*Buddhacarita* IX. 73

तदेवमप्येव रविर्महीं पते-
दपि स्थिरत्वं हिमवान् गिरिस्त्यजेत् ।
अदृष्टतत्त्वो विषयोन्मुखेन्द्रियः
श्रयेय न त्वेव गृहान् पृथग्जनः ।।

ibid. 78

अहं विशेयं ज्वलितं हुताशनं
न चाकृतार्थः प्रविशेयमालयम् ।
इति प्रतिज्ञां स चकार गर्वितो
यथेष्टमुत्थाय च निर्ममो ययौ ।।

ibid. 79

## MEETING WITH ARĀḌA AND OTHERS

## अराडादिसाक्षात्कारः

ततः शमविहारस्य मुनेरिक्ष्वाकुचन्द्रमाः ।
अराडस्याश्रमं भेजे वपुषा पूरयन्निव ।।

ibid. XII. 1

स कालामसगोत्रेण तेनालोक्यैव दूरतः ।
उच्चैः स्वागतमित्युक्तः समीपमुपजग्मिवान् ।।

ibid. 2

श्रूयतामयमस्माकं सिद्धान्तः शृण्वतां वर ।
यथा भवति संसारो यथा चैव निवर्तते ।।

ibid. 16

प्रकृतिश्च विकारश्च जन्म मृत्युर्जरैव च ।
तत्तावत्सत्त्वमित्युक्तं स्थिरसत्त्व परेहि तत् ।।

ibid. 17

तत्र तु प्रकृतिं नाम विद्धि प्रकृतिकोविद ।
पञ्च भूतान्यहंकारं बुद्धिमव्यक्तमेव च ।

*Buddhacarita* XII. 18

विकार इति बुध्यस्व विषयानिन्द्रियाणि च ।
पाणिपादं च वादं च पायूपस्थं तथा मनः ।।

ibid. 19

अस्य क्षेत्रस्य विज्ञानात्क्षेत्रज्ञ इति संज्ञि च ।
क्षेत्रज्ञ इति चात्मानं कथयन्त्यात्मचिन्तकाः ।।

ibid. 20

सशिष्यः कपिलश्चेह प्रतिबुद्धिरिति स्मृतिः ।
सपुत्रोऽप्रतिबुद्धस्तु प्रजापतिरिहोच्यते ।।

ibid. 21

जायते जीर्यते चैव बाध्यते म्रियते च यत् ।
तद्व्यक्तमिति विज्ञेयमव्यक्तं तु विपर्ययात् ।।

ibid. 22

अज्ञानं कर्म तृष्णा च ज्ञेयाः संसारहेतवः ।
स्थितोऽस्मिंस्त्रितये जन्तुस्तत्सत्त्वं नातिवर्तते ।।

ibid. 23

विप्रत्ययादहंकारात्संदेहादभिसंप्लवात् ।
अविशेषानुपायाभ्यां सङ्गादभ्यवपाततः ।।

ibid 24

ब्रवीम्यहमहं वेद्मि गच्छाम्यहमहं स्थितः ।
इतीहैवमहंकारस्त्वनहंकार वर्तते ।।

ibid. 26

य एवाहं स एवेदं मनो बुद्धिश्च कर्म च ।
यश्चैवैष गणः सोऽहमिति यः सोऽभिसंप्लवः ।

ibid. 28

अविशेषं विशेषज्ञ प्रतिबुद्धाप्रबुद्धयोः ।
प्रकृतीनां च यो वेद सोऽविशेष इति स्मृतः ।।

ibid. 29

नमस्कारवषट्कारौ प्रोक्षणाभ्युक्षणादयः ।
अनुपाय इति प्राज्ञैरुपायज्ञ प्रवेदितः ।।

*Buddhacarita* XII. 30

सज्जते येन दुर्मेधा मनोवाग्बुद्धिकर्मभिः ।
विषयेष्वनभिष्वङ्ग सोऽभिष्वङ्ग इति स्मृतः ।।

ibid. 31

ममेदमहमस्येति यद् दुःखमभिमन्यते ।
विज्ञेयोऽभ्यवपातः स संसारे येन पात्यते ।।

ibid. 32

इत्यविद्यां हि विद्वान् स पञ्चपर्वां समीहते ।
तमो मोहं महामोहं तामिस्रद्वयमेव च ।।

ibid. 33

तत्र सम्यङमतिर्विद्यान्मोक्षकाम चतुष्टयम् ।
प्रतिबुद्धाप्रबुद्धौ च व्यक्तमव्यक्तमेव च ।।

ibid. 40

यथावदेतद्विज्ञाय क्षेत्रज्ञो हि चतुष्टयम् ।
आजवंजवतां हित्वा प्राप्नोति पदमक्षरम् ।।

ibid. 41

इत्यर्थं ब्राह्मणा लोके परमब्रह्मवादिनः ।
ब्रह्मचर्यं चरन्तीह ब्राह्मणान्वासयन्ति च ।।

ibid. 42

इति धर्ममराडस्य विदित्वा न तुतोष सः ।
अकृत्स्नमिति विज्ञाय ततः प्रतिजगाम ह ।।

ibid. 83

## MEETING WITH BIMBISĀRA

## बिम्बिसाराभिगमनम्

अथ विमलधरो ह्यनन्ततेजो स्वयमिह प्रव्रजियान बोधिसत्त्वः ।
शान्तमनु दान्त ईर्यवन्तो विहरति पाण्डवशैलराजपार्श्वे ।।

*Lal. Vis.* 240

रजनि विगतु ज्ञात्व बिम्बिसारो महत जनैः परिवारितो नरेन्द्रः ।
उपगमि पाण्डवशैलराजमूले शिरिय ज्वलन्तु तमदृशाति शैलम् ।।

*Lal. Vis.* 241

धरणि व्रजितु यानि ओरुहित्वा परमसुगौरव प्रेक्षि बोधिसत्त्वम् ।
मेरुरिव यथा ह्यकम्प्यमानो न्यसिय तृणानि निषण्ण सोस्तिकेन ।।

ibid.

शिरसि चरणि वन्दयित्व राजा विविधकथां समुदाहरित्व वोचत् ।
ददमि तव उपार्धु सर्वराज्याद् रम इह कामगुणैरहं च पिण्डम् ।।

ibid.

प्रभणति गिरि बोधिसत्त्व श्लक्ष्णं अकुटिलप्रेमणिया हितानुकम्पी ।
स्वस्ति धरणिपाल तेऽस्तु नित्यं न च अहु कामगुणेभिरर्थिकोऽस्मि ।।

ibid. 242

ये तु धरणिपाल शान्तदान्ता आर्य अनास्रव धर्मपूर्णसंज्ञा ।
प्रज्ञविदुष तृप्त ते सुतृप्ता न च पुन कामगुणेषु काचि तृप्तिः ।।

ibid.

काम धरणिपाल सेवमाना पुरिम न विद्यति कोटि संस्कृतस्य ।
लवणजल यथा हि नारु पित्वा भूयु तृष वर्धति काम सेवमाने ।।

ibid.

अपि च धरणिपाल पश्य कायं अध्रुवमसारकु दुःखयन्त्रमेतत् ।
नवभि व्रणमुखैः सदा स्रवन्तं न मम नराधिप कामछन्दरागः ।।

ibid.

अहमपि विपुलां विजह्य कामां तथपि च इस्त्रिसहस्र दर्शनीयाम् ।
अनभिरतु भवेषु निर्गतोऽहं परमशिवां वरबोधि प्राप्तुकामः ।।

ibid.

## MEETING WITH RUDRAKA

### रुद्रकदर्शनम्

विशेषमथ शुश्रूषु रुद्रकस्याश्रमं ययौ।
आत्मग्राहाच्च तस्यापि जगृहे न स दर्शनम् ।।

*Buddhacarita* XII. 84

संज्ञासंज्ञित्वयोर्दोषं ज्ञात्वा हि मुनिरुद्रकः।
आकिंचन्यात्परं लेभेऽसंज्ञासंज्ञात्मिकां गतिम् ।।

ibid. 85

यस्माच्चालम्बने सूक्ष्मे संज्ञासंज्ञे ततः परम्।
नासंज्ञी नैव संज्ञीति तस्मात्तत्र गतस्पृहः।।

ibid. 86

यतश्च बुद्धिस्तत्रैव स्थितान्यत्राप्रचारिणी।
सूक्ष्मापट्वी ततस्तत्र नासंज्ञित्वं न संज्ञिता।।

ibid. 87

यस्माच्च तदपि प्राप्य पुनरावर्तते जगत्।
बोधिसत्त्वः परं प्रेप्सुस्तस्मादुद्रकमत्यजत् ।।

ibid. 88

## SIX YEARS OF ASCETICISM

### षड्वर्षदुष्करचर्या

तस्य च गुणान्वितस्य पुराद्विनिष्क्रम्य बोधिसत्त्वस्य।
चिन्ता उपाययुक्ता सत्त्वार्थहिताय उत्पन्ना।।

*Lal. Vis.* 257

पञ्चसु कषायकाले हीनेऽधर्माधिमुक्तिके लोके।
जातोऽस्मि जम्बुद्वीपे धर्मक्रिय उद्धरे लोके।।

ibid.

आकीर्ण तीर्थिकगणैः कौतूहलमङ्गलैरिमे युक्ता।
कायोपक्रमकरणैर्मन्यन्ते बालिशाः शुद्धिम् ।।

*Lal. Vis.* 258

विविधैश्च कारणैस्ते कायं परिशोधयन्ति संमूढाः।
मिथ्यादृष्टिपरीताः क्षिप्रं प्रपतन्त्यपायेषु ।।

ibid.

आस्फानकं च ध्यानं ध्यायेयं वज्रकल्पदृढस्थानम्।
यं ध्यानं न समर्थाः प्रत्येकजिनापि दर्शयितुम् ।।

ibid. 259

सन्तीह देवमनुजाः तीर्थिक लूहव्रतेन हृष्यन्ते।
तेष परिपाकहेतो दुष्करव्रततप रमेय सूतीव्रम् ।।

ibid.

पर्यङ्कमाभुजित्वा उपविष्टोऽभूत्स्थले असंस्तीर्णे।
कोलतिलतण्डुलेना आहारविधिं विदर्शयति ।।

ibid.

आश्वासविप्रहीनः प्रश्वासवर्जितु न चेञ्जते बलवान्।
षड्वर्षाणि प्रवरं ध्यायत्यास्फानकं ध्यानम् ।।

ibid.

संशुष्कमांसरुधिरं चर्मस्नाय्वस्थिकाश्च अवशिष्टा।
उदराच्च पृष्ठिवंशो विदृश्यते वर्तिता यथा वेणी ।।

ibid. 260

अथ कष्टतपःस्पष्टव्यर्थक्लिष्टतनुर्मुनिः।
भवभीरुरिमां चक्रे बुद्धिं बुद्धत्वकांक्षया ।।

*Buddhacarita* XII. 100

नायं धर्मो विरागाय न बोधाय न मुक्तये।
जम्बुमूले मया प्राप्तो यस्तदा स विधिर्ध्रुवः।

ibid. 101

न चासौ दुर्बलेनाप्तुं शक्यामित्यागतादरः ।
शरीरबलवृद्ध्यर्थमिदं भूयोऽन्वचिन्तयत् ।।

*Buddhacarita* 102

स्नातो नैरञ्जनातीरादुत्ततार शनैः कृशः ।
भक्त्यावनतशाखाग्रैर्दत्तहस्तस्तटद्रुमैः ।।

ibid. 108

अथ गोपाधिपसुता दैवतैरभिचोदिता ।
उद्भूतहृदयानन्दा तत्र नन्दबलागमत् ।।

ibid. 109

सा श्राद्धावर्धितप्रीतिर्विकसल्लोचनोत्पला ।
शिरसा प्रणिपत्यैनं ग्राहयामास पायसम् ।।

ibid. 111

## CONVERSATION WITH MĀRA

### मारसंलापः*

रमणीयान्यरण्यानि वनगुल्माश्च वीरुधाः ।
प्राचीनमुरुविल्वायां यत्र नैरञ्जना नदी ।।

*Lal. Vis.* 261

प्रहाणायोद्यतं तत्र सततं दृढविक्रमम् ।
पराक्रमन्तं वीर्येण योगक्षेमस्य प्राप्तये ।।

ibid.

नमुचिर्मधुरां वाचं भाषमाणो उपागमत् ।
शाक्यपुत्रा समुत्तिष्ठ कायखेदेन किं तव ।।

ibid.

जीवतो जीवितं श्रेयो जीवन्धर्मं चरिष्यसि ।
जीवं हि तानि कुरुते यानि कृत्वा न शोचति ।।

ibid.

---

* Cf. Padhānasutta in Pali; MAHĀVASTU II. 238

कृशो विवर्णो दीनस्त्वं अन्तिके मरणं तव।
सहस्रभागे मरणं एकभागे च जीवितम्।।

*Lal. Vis.* 261

ददतः सततं दानं अग्निहोत्रं च जुह्वतः।
भविष्यति महत्पुण्यं किं प्रहाणे करिष्यसि।।

ibid.

दुःखं मार्गं प्रहाणस्य दुष्करं चित्तनिग्रहम्।
इमां वाचं तदा मारो बोधिसत्त्वमथाब्रवीत्।।

ibid.

तं तथावादिनं मारं बोधिसत्त्वस्ततोऽब्रवीत्।
प्रमत्तबन्धो पापीय स्वेनार्थेन त्वमागतः।।

ibid.

अणुमात्रं हि मे पुण्यैरर्थो मार न विद्यते।
अर्थो येषां तु पुण्येन तानेवं वक्तुमर्हसि।।

ibid.

नैवाहं मरणं मन्ये मरणान्तं हि जीवितम्।
अनिवर्ती भविष्यामि ब्रह्मचर्यपरायणः।।

ibid.

स्रोतांस्यपि नदीनां हि वायुरेष विशोषयेत्।
किं पुनः शोषयेत्कायं शोणितं प्रहितात्मनाम्।।

ibid. 262

शोणिते तु विशुष्के वै ततो मांसं विशुष्यति।
मांसेषु क्षीयमाणेषु भूयश्चित्तं प्रसीदति।
भूयश्छन्दश्च वीर्यं च समाधिश्चावतिष्टते।।

ibid.

तस्यैव मे विहरतः प्राप्तस्योत्तमचेतनाम्।
चित्तं नावेक्षते कायं पश्य सत्त्वस्य शुद्धताम्।।

ibid.

न चासौ दुर्बलेनाप्तुं शक्यामित्यागतादरः।
शरीरबलवृद्धचर्थमिदं भूयोऽन्वचिन्तयत् ।।

*Buddhacarita* 102

स्नातो नैरञ्जनातीरादुत्ततार शनैः कृशः।
भक्तयावनतशाखाग्रैर्दत्तहस्तस्तटद्रुमैः ।।

ibid. 108

अथ गोपाधिपसुता दैवतैरभिचोदिता।
उद्भूतहृदयानन्दा तत्र नन्दबलागमत् ।।

ibid. 109

सा श्राद्धावर्धितप्रीतिर्विकसल्लोचनोत्पला।
शिरसा प्रणिपत्यैनं ग्राहयामास पायसम् ।।

ibid. 111

## CONVERSATION WITH MĀRA

### मारसंलापः*

रमणीयान्यरण्यानि वनगुल्माश्च वीरुधाः।
प्राचीनमुरुविल्वायां यत्र नैरञ्जना नदी ।।

*Lal. Vis.* 261

प्रहाणायोद्यतं तत्र सततं दृढविक्रमम्।
पराक्रमन्तं वीर्येण योगक्षेमस्य प्राप्तये ।।

ibid.

नमुचिर्मधुरां वाचं भाषमाणो उपागमत्।
शाक्यपुत्रा समुत्तिष्ठ कायखेदेन किं तव ।।

ibid.

जीवतो जीवितं श्रेयो जीवन्धर्मं चरिष्यसि।
जीवं हि तानि कुरुते यानि कृत्वा न शोचति ।।

ibid.

* Cf. Padhānasutta in Pali; Mahāvastu II. 238

कृशो विवर्णो दीनस्त्वं अन्तिके मरणं तव ।
सहस्रभागे मरणं एकभागे च जीवितम् ।।

*Lal. Vis.* 261

ददतः सततं दानं अग्निहोत्रं च जुह्वतः ।
भविष्यति महत्पुण्यं किं प्रहाणे करिष्यसि ।।

ibid.

दुःखं मार्गं प्रहाणस्य दुष्करं चित्तनिग्रहम् ।
इमां वाचं तदा मारो बोधिसत्त्वमथाब्रवीत् ।।

ibid.

तं तथावादिनं मारं बोधिसत्त्वस्ततोऽब्रवीत् ।
प्रमत्तबन्धो पापीय स्वेनार्थेन त्वमागतः ।।

ibid.

अणुमात्रं हि मे पुण्यैरर्थो मार न विद्यते ।
अर्थो येषां तु पुण्येन तानेवं वक्तुमर्हसि ।।

ibid.

नैवाहं मरणं मन्ये मरणान्तं हि जीवितम् ।
अनिवर्ती भविष्यामि ब्रह्मचर्यपरायणः ।।

ibid.

स्रोतांस्यपि नदीनां हि वायुरेष विशोषयेत् ।
किं पुनः शोषयेत्कायं शोणितं प्रहितात्मनाम् ।।

ibid. 262

शोणिते तु विशुष्के वै ततो मांसं विशुष्यति ।
मांसेषु क्षीयमाणेषु भूयश्चित्तं प्रसीदति ।
भूयश्छन्दश्च वीर्यं च समाधिश्चावतिष्ठते ।।

ibid.

तस्यैव मे विहरतः प्राप्तस्योत्तमचेतनाम् ।
चित्तं नावेक्षते कायं पश्य सत्त्वस्य शुद्धताम् ।।

ibid.

अस्ति छन्दं तथा वीर्यं प्रज्ञापि मम विद्यते।
तं न पश्याम्यहं लोके वीर्याद्यो मां विचालयेत्॥

*Lal. Vis.* 262

वरं मृत्युः प्राणहरो धिग्ग्राम्यं नोपजीवितम्।
संग्रामे मरणं श्रेयो यच्च जीवेत्पराजितः॥

ibid.

नाशूरो जयते सेनां जित्वा चैनां न मन्यते।
शूरस्तु जयते सेनां लघु मार जयामि ते॥

ibid.

कामास्ते प्रथमा सेना द्वितीया अरतिस्तथा।
तृतीया क्षुत्पिपासा ते तृष्णा सेना चतुर्थिका॥

ibid.

पञ्चमी स्त्यानमिद्धं ते भयं षष्ठी निरुच्यते।
सप्तमी विचिकित्सा ते क्रोधम्रक्षौ तथाष्टमी॥

ibid.

लोभश्लोकौ च संस्कारा मिथ्यालब्धं च यद्यशः।
आत्मानं यश्च उत्कर्षेद्यश्च वै ध्वंसयेत्पराम्॥

ibid.

एषा हि नमुचेः सेना कृष्णबन्धोः प्रतापिनः।
अत्रावगाढा दृश्यन्ते एते श्रमणब्राह्मणाः॥

ibid.

या ते सेना धर्षयति लोकमेनं सदेवकम्।
भेत्स्यामि प्रज्ञया तां ते आमपात्रमिवाम्बुना॥

ibid.

स्मृतिं सूपस्थितां कृत्वा प्रज्ञां चैव सुभाविताम्।
संप्रजानं चरिष्यामि किं करिष्यसि दुर्मते॥

ibid. 263

## CONQUEST OE MĀRA

### मारधर्षणम्

गाथाभि गीतरचितोऽद्य श्रुतोऽन्तरीक्षा-
च्छाक्येषु जातु वरलक्षणचित्रिताङ्गः।
षड्वर्ष दुष्करव्रतानि चरित्व घोरा
बोधिद्रुमं ह्युपगतः प्रकुरुष्व यत्नम्॥

*Lal. Vis.* 303

हन्त व्रजाम सहिता महता बलेन
घातेम तं श्रमणु एकु द्रुमेन्द्रमूले।
उद्योजयध्व चतुरङ्गिणि शीघ्र सेनां
यदि इच्छथा मम प्रियं म चिरं करोथ॥

ibid.

भूतां चोदन श्रुत्व देवतगणा न निवर्तते सोऽन्तको
उच्छेथा हनथा विलुम्पथ इमां मा दास्यथा जीवितम्।
एषोत्तीर्ण स्वयं ममापि विषयां तारिष्यते चापरां
नान्यं मोक्ष वदेमि किंचि श्रमणे उत्थापयेत्प्रक्रमेत्॥

ibid. 335

बोधिसत्त्व आह।

मेरुः पर्वतराज स्थानतु चले सर्वं जगन्नो भवेत्
सर्वे तारकसंघ भूमि प्रपते सज्योतिषेन्दुर्नभात्।
सर्वा सत्त्व करेय एकमतयः शुष्येन्महासागरो
न त्वेव द्रूमराजमूलुपगतश्चाल्येत अस्मद्विधः॥

ibid.

अज्ञानपूर्वकु तपो ऋषिभिः प्रतप्तो
क्रोधाभिभूतमतिभिर्दिवलोककामैः।
नित्यं न नित्यमिति चात्मनि संश्रयद्भिः
मोक्षं च देशगमनस्थितमाश्रयद्भिः॥

ibid. 336

ते तत्त्वतोऽर्थरहिताः पुरुषं वदन्ति
व्यापिं प्रदेशगत शाश्वतमाहुरेके
मूर्तं न मूर्तमगुणं गुणिना तथैव
कर्ता न कर्त इति चाप्यपरे ब्रुवन्ति ।।

*Lal. Vis.* 337

प्राप्याद्य बोधि विरजामिह चासनस्थः
त्वां जित्व मार विहतं सबलं ससैन्यम् ।
वर्तेष्यि अस्य जगतः प्रभवोद्भवं च
निर्वाण दुःखशमनं तथ शीतिभावम् ।।

ibid.

मारः प्राह ।
मारः क्रुद्धो दुष्टो रुष्टः परुषगिर पुन तु भणते गृहाण सुगौतमं
एषो ह्येकोऽरण्ये न्यस्तो ग्रहिय मम पुरतु व्रजथा लघुं वशु कुर्वथा ।
शीघ्रं गत्वा मह्यं गेहे हडिनिगडयुगडविकृतं करोथ दुवारिकं
स्वा मं द्रक्ष्ये दुःखेनार्त्तं बहुविविधजवितरवितं मरुण व चेटकम् ।।

ibid.

बोधिसत्त्व आह ।
शक्याकाशे लेख्यं चित्रं बहुविविधविकृत पदशः प्रकर्तु पृथक्पृथक्
शक्यो वायुः पाशैर्बद्धुं दिशविदिशगमनजवितो नरेण सुयत्नतः ।
शक्या कर्तुं चन्द्रादित्यौ तमतिमिरवितिमिरकरौ नभोद्य महीतलं
शक्यो नाहं त्वत्सादृश्यैर्बहुभिरपि गणनविरुतैर्द्रुमात्प्रतिचालितुम् ।।

ibid.

## FELICITATION AT VICTORY

### विजयाभिनन्दनम्

नागराजस्याग्रमहिषी सुवर्णप्रभासा आह ।
अभ्रान्ता अत्रस्ता अभीरू अछम्भी
अलीना अदीना प्रहृष्टा दुधर्षा ।

अरक्ता अदुष्टा अमूढा अलुब्धा
विरक्ता विमुक्ता नमस्ते महर्षे ।।

*Lal. Vis.* 284

भिषङ्का विशल्या विनेया विनेषी
सुवैद्या जगस्या दुःखेभ्यः प्रमोची ।
अलेना अत्राणा अहीना विदित्वा
भवा लेनु त्राणो त्रिलोकेस्मि जातः ।।

ibid.

प्रसन्ना प्रहृष्टा यथा देवसंघाः
प्रवर्षी नभस्था महत्पुष्पवर्षम् ।
महाचैलक्षेपं करोन्ती यथेमे
जिनो भेष्यसेऽद्या कुरुष्व प्रहर्षम् ।।

ibid. 285

उपेहि द्रुमेन्द्रं निषीदा अछम्भी
जिना मारसेनां धुन क्लेशजालम् ।
विबुद्धच प्रशान्तां वरामग्रबोधिं
यथा पौर्वकैस्तैर्विबुद्धा जिनेन्द्रैः ।।

ibid.

त्वया यस्य अर्थे बहुकल्पकोढचः
कृता दुष्कराणी जगन्मोचनार्थम् ।
प्रपूर्णा ति आशा अयं प्राप्तु कालो
उपेहि द्रुमेन्दं स्पृशस्वाग्रबोधिम् ।।

ibid.

गृह्लीत्वा तृणमुष्टि नायकः परमसुमृदुकां
सिंहाहंसगतिश्च प्रस्थितः प्रचलित धरणी ।
देवा नागगणाः कृताञ्जली प्रमुदितमनसः
अद्या मारबलं निहत्ययं स्पृशिष्यति अमृतम् ।।

ibid. 288

इहासने शुष्यतु मे शरीरं त्वगस्थिमांसं प्रलयं च यातु ।
अप्राप्य बोधिं बहुकल्पदुर्लभां नैवासनात्कायमतश्चलिष्यते ।।

*Lal. Vis.* 289

अथ खलु परनिर्मितवशवर्ती देवपुत्रोऽनेकैर्देवपुत्रसहस्रैः परिवृतः पुरस्कृतो जाम्बुनदसुवर्णवर्णैः पद्मैस्तथागतमभ्यवकीर्य संमुखाभिर्गाथाभिरभ्यस्तावीत् ।

अपिडित अलुडित अवितथवचना
अपगततमरज अमृतगतिगता ।
अरहसि दिवि भुवि श्रियक्रियमतुला
अतिद्युतिस्मृतिमति प्रणिपति शिरसा ।।

ibid. 361

रतिकर रणजह रजमलमथना
रमयसि सुरनर सुविशदवचनैः ।
विकसित सुविपुल वरतनु किरणैः
सुरनरपतिरिव जयसि जगदिदम् ।।

ibid. 362

परगणिप्रमथन परचरिकुशला
प्रियु भव नरमरु परमति धुनता ।
परचरि विभजसि सुनिपुणमतिमान्
पथि इह विचरतु दशबलगमने ।।

ibid.

त्यजि पृथु भवग्रहि वितथदुःख महा
विनियसि सुरनर यथमति विनये ।
विचरसि चतुर्दिश शशिरिव गगने
चक्षु भव परायण इह भुवि त्रिभवे ।।

ibid.

प्रियु भव नरमरु न च खलि विषये
रमयसि शुभरति कामरतिविरतो ।

दिनदर्शि परिषदि न ति समु त्रिभवे
नाथु गति परायणु त्वमिह हि जगतः ।।

*Lal. Vis.* 362

अस्खलिता अनवद्या सदा सुस्थिता मेरुकल्पा मुने
दशदिशि सुविघुष्ट ज्ञानप्रभा पुण्यतेजान्विता ।
बुद्धशतसहस्र संपूजिता पूर्वि तुभ्यं मुने
तस्य विशेषु येन बोधिद्रुमे मारसेना जिता ।।

ibid. 365

शीलश्रुतसमाधिप्रज्ञाकरा ज्ञानकेतुध्वजा
जरमरणनिघाति वैद्योत्तमा लोकचक्षुर्ददा ।
त्रिमलखिलप्रहीण शान्तेन्द्रिया शान्तचित्ता मुने
शरणु तवमुपेम शाक्यर्षभा धर्मराजा जगे ।।

ibid.

## ENLIGHTENMENT

## बोधिलाभः

ततो मारबलं जित्वा धैर्येण च शमेन च ।
परमार्थं विजिज्ञासुः स दध्यौ ध्यानकोविदः ।।

*Buddhacarita* XIV. 1

सर्वेषु ध्यानविधिषु प्राप्य चैश्वर्यमुत्तमम् ।
सस्मार प्रथमे यामे पूर्वजन्मपरंपराम् ।।

ibid. 2

## HESITATION TO PREACH THE TRUTH

## धर्मदेशनासंशयः*

इति हि तथागतस्य तारायणमूले विहरतः प्रथमाभिसंबुद्धस्यैकस्य रहोगतस्य प्रतिसंलीनस्य लोकानुवर्तिना प्रत्येतदभवत् ।

* Cf. Ariyapariyesanasutta in the MAJJHIMA NIKĀYA I. 26

गम्भीरो बतायं मया धर्मो ऽधिगतो ऽभिसंबुद्धः। शान्तः प्रशान्त उपशान्तः प्रणीतो दुर्दृशो दुरनुबोधो ऽतर्को ऽवितर्कावचरः। अलमार्यः पण्डितवेदनीयो यदुत सर्वोपधिनिःसर्गो ऽवेदितो ऽनिवेदितः परमार्थो ऽनालयः। शीतीभावो ऽनादानो ऽनुपादानो ऽविज्ञप्तो ऽविज्ञापनीयो ऽसंस्कृतः षड्विषय-समतिक्रान्तः। अकल्पो ऽविकल्पो ऽनभिलाप्यः। अरुतो ऽघोषो ऽनुदाहारः। अनिदर्शनो ऽप्रतिघः सर्वालम्बनसमतिक्रान्तः। शमथधर्मोपच्छेदः। शून्यतानुपलम्भः। तृष्णाक्षयो विरागो निरोधो निर्वाणम्। अहं चेदिमं परेभ्यो धर्मं देशयेयं ते चेन्नाजानीयुः स मे स्यात्क्लमथो मिथ्याव्यायामो ऽक्षणधर्मदेशनता च। यन्वहमल्पौत्सुकस्तूष्णीभावेन विहरेयम्। तस्यां च वेलायामिमां गाथामभाषत।

*Lal. Vis.* 392

गम्भीर शान्तो विरजः प्रभास्वरः प्राप्तो मि धर्मो ह्यमृतोऽसंस्कृतः।
देशेय चाहं न परस्य जाने यन्नून तूष्णी पवने वसेयम्॥

ibid. 393

अपगतगिरिवाक्पथो ह्यलिप्तो यथ गगनं तथा स्वभावधर्मम्।
चित्तमन विचारविप्रमुक्तं परमसुआश्चरियं परो विजाने॥

ibid.

न च पुनरयु शक्य अक्षरेभिः प्रविशतु अनर्थयोगविप्रवेशः।
पुरिमजिनकृताधिकारसत्त्वाः ते इमु श्रुणित्व हि धर्मु श्रद्दधन्ति॥

ibid.

न च पुनरिह कश्चिदस्ति धर्मः सो पि न विद्यते यस्य नास्तिभावाः।
हेतुक्रियपरंपरा य जाने तस्य न भोतिह अस्तिनास्तिभावाः॥

ibid.

यद मय प्रतिलब्ध एष क्षान्ती म्रियति न चेह न कश्चि जायते वा।
प्रकृति इमि निरात्म सर्वधर्माः तद मां व्याकरि बुद्ध दीपनामा॥

ibid.

करुण मम अनन्त सर्वलोके परतु न चार्थनतामहं प्रतीक्षे।
यद पुन जनता प्रसन्न ब्रह्मे तेन अधीष्टु प्रवर्तयिष्य चक्रम्॥

ibid.

प्रतिस्रोतगामि मार्गो गम्भीरो दुर्दृशो मम।
न तं द्रक्ष्यन्ति रागान्धा अलं तस्मात्प्रकाशितुम्।।

*Lal. Vis.* 397

अनुस्रोतं प्रवाह्यचन्ते कामेषु पतिता प्रजाः।
कृच्छ्रेण मेऽयं संप्राप्तं अलं तस्मात्प्रकाशितुम्।।

ibid

अथ खलु शिखी महाब्रह्मा तथागतं गाथाभिरध्यभाषत–
वादो बभूव समलैर्विचिन्तितो धर्मोऽविशुद्धो मगधेषु पूर्वम्।
अमृतं मुने तद्विवृणीष्व द्वारं श्रृण्वन्ति धर्मं विमलेन बुद्धम्।।

ibid. 398

कृतस्वकार्थोऽसि भुजिष्यतां गतो दुःखाभिसंस्कारमलापकृष्टः।
न हानिवृद्धी कुशलस्य तेऽस्ति त्वमग्रधर्मेष्विह पारमिं गतः।।

ibid.

तथागत आह–
अपावृतास्तेषाममृतस्य द्वारा ब्रह्मन् ति सततं ये श्रोतवन्तः।
प्रविशन्ति श्रद्धा न विहेटसंज्ञाः श्रृण्वन्ति धर्मं मगधेषु सत्त्वाः।।

ibid. 400

## CONVERSATION WITH UPAKA

### बुद्धोपकसंलापः

तथागतोऽवोचत्।
आचार्यो न हि मे कश्चित्सदृशो मे न विद्यते।
एकोऽहमस्मि संबुद्धः शीतीभूतो निरास्रवः।।

ibid. 405

अहमेवारहं लोके शास्ता ह्यहमनुत्तरः।
सदेवासुरगन्धर्वे नास्ति मे प्रतिपुद्गलः।

ibid. 406

उपकोऽवोचत्। जिनं खलु गौतम मात्मनं प्रतिजानीषे।

ibid. 406

तथागतोऽवोचत्।
जिना हि मादृशा ज्ञेया ये प्राप्ता आस्रवक्षयम्।
जिता मे पापका धर्मास्तेनोपग जिनो ह्यहम्।।

*Lal. Vis.* 406

उपकोऽवोचत्। क्व तर्ह्यायुष्मन् गौतम गमिष्यसि।

ibid.

तथागतोऽवोचत्।
वाराणसीं गमिष्यामि गत्वा वै काशिनां पुरीम्।
अन्धभूतस्य लोकस्य कर्तास्म्यसदृशां प्रभाम्।।

ibid.

यः श्रोतुकामु धर्मं यः कल्पनयुतैः समार्जितु जिनेन।
शीघ्रमसौ त्वरमाणो आगच्छतु धर्मश्रवणाय।।

ibid. 412

दुरवाप्यं मानुष्यं बुद्धोत्पादः सुदुर्लभा श्रद्धा।
श्रेष्ठं च धर्मश्रवणं अष्टाक्षणविवर्जन दुरापाः।।

ibid.

प्राप्तश्च तेऽद्य सर्वे बुद्धोत्पादः क्षणस्तथा श्रद्धा।
धर्मश्रवणश्च वरः प्रमादमखिलं विवर्जयत।।

ibid.

# DHARMACAKRA

## द्वादशाकारं धर्मचक्रम्

हेतुं प्रतीत्य इमि संभूत सर्वधर्मा
अत्यन्तदृष्टिविगता गगणप्रकाशा ।
न च कारकोऽस्ति तथ नैव च वेदकोऽस्ति
न च कर्म पश्यति कृतं ह्यशुभं शुभं वा ।।

*Lal. Vis.* 419

स्कन्धा प्रतीत्य समुदेति हि दुःखमेवं
संभोन्ति तृष्ण सलिलेन विवर्धमाना ।
मार्गेण धर्मसमताय विपश्यमाना
अत्यन्तक्षीण क्षयधर्मतया निरुद्धाः।।

ibid.

संकल्पकल्पजनितेन अयोनिशेन
भवते अविद्य न पि संभवकोऽस्य कश्चि ।
संस्कारहेतु ददते न च संक्रमोऽस्ति
विज्ञानमुद्भवति संक्रमणं प्रतीत्य ।।

ibid.

विज्ञान नाम तथ च रूप समुत्थितास्ति
नामे च रूपि समुदेन्ति षडिन्द्रियाणि ।
षडिन्द्रियैर्निपतितो इति स्पर्श उक्तः
स्पर्शेन तिस्र अनुवर्तति वेदना च ।

ibid.

यत्किंचि वेदयितु सर्व सतृष्ण उक्ता
तृष्णात सर्व उपजायति दुःखस्कन्धः ।
उपादानतो भवति सर्व भवप्रवृत्तिः
भवप्रत्यया च समुदेति हि जातिरस्य ।।

ibid. 420

जातोनिदान जरव्याधिदु:खानि भोन्ति
उपपत्ति नैक विविधा भवपञ्जरेऽस्मिन् ।
एवमेष सर्व इति प्रत्ययतो जगस्य
न च आत्म पुद्गलु न संक्रमकोऽस्ति कश्चि ।।

*Lal. Vis.* 420

यस्मिन्न कल्पु न विकल्पु योनिमाहुः
यद्योनिशो भवति न तत्र अविद्य काचि ।
यस्मिन्निरोधु भवतीह अविद्यतायाः
सर्वे भवाङ्ग क्षयक्षीण क्षयं निरुद्धा ।।

ibid.

एवमेष प्रत्ययत बुद्ध तथागतेन
तेन स्वयंभु स्वकमात्मनु व्याकरोति ।
न स्कन्ध आयतन धातु वदेमि बुद्धं
नान्यत्र हेत्ववगमाद्भवतीह बुद्धः ।।

ibid.

भूमिर्न चात्र परतीर्थिक निःसृतानां
शून्या प्रवादि इह ईदृश धर्मयोगे ।
ये पूर्वबुद्धचरिता सुविशुद्धसत्त्वाः
ते शक्नुवन्ति इमि धर्म विजाननाय ।।

ibid.

एवं हि द्वादशाकारं धर्मचक्रं प्रवर्तितम् ।
कौण्डिन्येन च आज्ञातं निर्वृत्ता रतना त्रयः ।।

ibid. 421

## CONVERSION OF FIVE BRĀHMAṆAS

### ब्राह्मणपंचकदीक्षणम्

कौण्डिन्यं प्रथमं कृत्वा पञ्चकाश्चैव भिक्षवः ।
षष्टीनां देवकोटीनां धर्मचक्षुर्विशोधितं ।।

ibid.

गम्भीरं दुर्दृशं सूक्ष्मं धर्मचक्रं प्रवर्तितम् ।
यत्र मारा न गाहन्ते सर्वे च परतीर्थिकाः ।।

*Lal. Vis.* 436

अनालयं निष्प्रपञ्चं अनुत्पादमसंभवम् ।
विविक्तं प्रकृतीशून्यं धर्मचक्रं प्रवर्तितम् ।।

ibid.

अनायूहमनिर्यूहमनिमित्तमलक्षणम् ।
समताधर्मनिर्देशं चक्रं बुद्धेन वर्णितम् ।।

ibid.

मायामरीचि स्वप्नं च दकचन्द्र प्रतिश्रुत्का ।
यथैते तथा तच्चक्रं लोकनाथेन वर्तितम् ।।

ibid.

प्रतीत्य धर्मओतारमनुच्छेदमशाश्वतम् ।
सर्वदृष्टिसमुच्छेदो धर्मचक्रमिति स्मृतम् ।।

ibid.

आकाशेन सदा तुल्यं निर्विकल्पं प्रभास्वरम् ।
अनन्तमध्यनिर्देशं धर्मचक्रमिहोच्यते ।।

ibid.

अस्ति नास्ति विनिर्मुक्तमात्म्यनैरात्म्यवर्जितम् ।
प्रकृत्याजातिनिर्देशं धर्मचक्रमिहोच्यते ।।

ibid.

भूतकोटीमकोटीं च तथतायां तथत्वतः ।
अद्वयो धर्मनिर्देशो धर्मचक्रं निरुच्यते ।।

ibid. 437

चक्षुः स्वभावतः शून्यं श्रोतं घ्राणं तथैव च ।
जिह्वा कायं च चित्तं च शून्यात्मानो निरीहकः ।।

ibid.

इदं तदीदृशं चक्रं धर्मचक्रं प्रवर्तितम् ।
बोधयत्यबुधान् सत्त्वांस्तेन बुद्धो निरुच्यते ।।

ibid.

## PRATĪTYASAMUTPĀDA

( Law of Interdependent Origination )

### प्रतीत्यसमुत्पाददेशना

ये धर्म हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवं वादी महाश्रमणः ।।

*Lal. Vis.* 444

अविद्यतः प्रत्ययसंभवाश्च
अविद्यमानैव अविद्यवाचः ।
तस्मान्मया उक्त अविद्य एषा
संस्कारविज्ञान सनामरूपम् ।।

*Suvarṇaprabhāsa* 53

षडायतनस्पर्श तथैव वेदना
तृष्णा उपादान तथा भवश्च ।
जातिजरामरणशोक उपद्रवाणां
दुःखानि संस्कार अचिन्तियानि ।।

ibid.

संसारचक्रे च यथा स्थितानि
अभूतसंभूत असंभवाश्च ।
अयोनिशश्चित्तविचारणं तथा
दृष्टीगतं छेत्स्यथ आत्मनैव ।।

ibid.

ज्ञानासिना छिन्दथ क्लेशजालं
स्कन्धालयं पश्यथ शून्यभूतम् ।
स्पर्शेथ तं बोधिगुणं ह्युदारं
विवर्तं च मे अमृतपुरस्य द्वारम् ।।

ibid. 54

यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य कांक्षा व्यपनेन्ति सर्वा
यदा प्रजानाति सहेतुधर्मा ।।

*Mahāvastu* II. 416

## ETHICAL TEACHINGS

## नैतिकोपदेशना

शीलस्कन्धो धनं श्रेष्ठं लोकनाथस्य शासने ।
न सुवर्णं न च रूप्यं धनं भिक्षुस्य वर्णितम् ।।

ibid. 357

मैत्राया शीलस्कन्धेन अरण्यवासे च उत्सुकः ।
सूरतः सुखसंवासो एतं श्रामण्यकं धनम् ।।

ibid.

अल्पेच्छो अल्पसन्तुष्टो सूरतो सुसमाहितः ।
हिरीओत्तप्पसंपन्नो एतं श्रामण्यकं धनम् ।।

साधुशीला भिक्षू हि सर्वे तृष्णां छित्त्वान जालिनीम् ।
सप्त बोध्यंगान्भावेन्ति एतं श्रामण्यकं धनम् ।।

ibid.

शून्यतां शान्तां भावेति भवा च विरतो मुनिः ।
बहुदुःखा असारा च एतं श्रामण्यकं धनम् ।।

ibid.

बोधाय चित्तं नामेत्वा हिताय सर्वप्राणिनाम् ।
यस्स्तूपं लोकनाथस्य करोति अभिप्रदक्षिणम् ।।

ibid. 362

स्मृतीमन्तो मतीमन्तो पुण्यवन्तो विशारदो ।
भोति सर्वत्र जातिषु चरन्तो बोधिचारिकाम् ।।

ibid.

न हि धर्मो अधर्मो च उभौ समविपाकिनौ ।
अधर्मो निरयं नेति धर्मो प्रापेति स्वर्गतिम् ।।

*Mahāvastu* II. 81

शतं माया क्षत्रियाणां ब्राह्मणानां दुवे शते ।
सहस्रं माया राजानां स्त्रीणां माया अनन्तिका ।।

ibid. 247

## DHARMAPADAM

## धर्मपदम्

यस्य जितं नाथ जीवति जितं अस्य न जिनाति अन्तको ।
तं बुद्धमनन्तगोचरं अपदं केन पदेन नेष्यथ ।।

ibid. III. 91

यस्य जालिनी समूहता तृष्णा नास्य कहिं पि नेत्रिका ।
तं बुद्धमनन्तविक्रमं अपदं केन पदेन नेष्यथ ।।

ibid. 92

गतिर्मृगाणां प्लवनं आकाशं पक्षिणां गतिः ।
धर्मो गतिर्द्विजातीनां निर्वाणं महती गतिः ।।

ibid. 156

गिरिं नखेहि खनथ अयो दन्तेहि खादथ ।
पर्वतं शिरसा हनथ अगाढे गाढमेषथ ।
किमु अन्वेथ पापीयो अपि बुद्धासूया सदा ।।

ibid. 285

का नु क्रीडा का नु रती एवं प्रज्वलिते सदा ।
अन्धकारस्मिं प्रक्षिप्ता प्रदीपं न गवेषथ ।।

ibid. 376

को नु हर्षो को नु आनन्दो एवं प्रज्वलिते सदा ।
अन्धकारस्मिं प्रक्षिप्ता आलोकं न प्रकाशथ ।।

ibid.

परेऽत्र न विजानन्ति वयमत्रोद्यमामहे ।
अत्र ये तु विजानन्ति तेषां शाम्यन्ति मेधकाः ।।

*Gilgit Manuscripts* III. ii. 183

यस्य पापकृतं कर्म कुशलेन पिधीयते ।
सोऽस्मिन्नाभासते लोके मुक्तोऽभ्रादिव चन्द्रमाः ।

ibid. iv. 56

अग्निहोत्रमुखा यज्ञाः सावित्री च्छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ।।

ibid. 225

नक्षत्राणां मुखं चन्द्र आदित्यस्तपतां मुखम् ।
ऊर्ध्वं तिर्यगधश्चापि यावती जगतो गतिः ।
सदेवकेषु लोकेषु संबुद्धो हीज्यतां वरः ।।

ibid.

वरं नरस्य परदेशवासो न तु स्वदेशे परिभूतवासः ।
यस्मिन्नराणां न पराभवोऽस्ति स वै स्वदेशः स्वजनोऽपि तत्र ।।

ibid. 20

न नग्नचर्या न जटा न पङ्को
नानाशनं स्थण्डिलशायिका वा ।
न रजो मलं नोत्कुटुकप्रहाणं
विशोधयेन्मोहमविशीर्णकाङ्क्षम् ।।

ibid. 40

अलंकृतश्चापि चरेत धर्मं
दान्तेन्द्रियः शान्तः संयतो ब्रह्मचारी ।
सर्वेषु भूतेषु निधाय दण्डं
स ब्राह्मणः स श्रमणः स भिक्षुः ।।

ibid. 40-41

यस्मिं न माया वसति न मानं
यो वीतरागो अनिघो निरासो ।

प्रनुन्नक्रोधो अभिनिर्वृतात्मा
सो ब्राह्मणो स श्रमणो स भिक्षुः ।।

*Mahāvastu* III. 418

यो ब्राह्मणो वाहितपापधर्मो
निहुहुंको निष्कषायो यतात्मा ।
क्षीणास्रवो अन्तिमदेहधारी
धर्मेण सो ब्राह्मणो ब्रह्मवादं वदेय ।।

ibid. 325

सर्वपापस्याकरणं कुशलस्योपसंपदा ।
स्वचित्तपर्यादापनं एतद्बुद्धानुशासनम् ।।

ibid 420

सहस्रमपि वाचानामनर्थपदसंहिता ।।
एका अर्थवती श्रेया यां श्रुत्वा उपशाम्यति ।।

ibid. 434

यो शतानि सहस्राणां संग्रामे मनुजा जये ।
यो चैकं जये आत्मानं स वै संग्रामजित् वरः ।।

ibid. 434

यो जयेत सहस्राणां मासे मासे शतं शतम् ।
न सो बुद्धे प्रसादस्य कलामर्घति षोडशीम् ।।

ibid.

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुंजरः ।

*Divyāvadāna* 138

यो हि अस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ।।

ibid. 139

बहवः शरणं यान्ति पर्वतांश्च वनानि च ।
आरामांश्चैत्यवृक्षांश्च मनुष्या भयर्वजिताः ।।

ibid. 164

न ह्येतच्छरणं श्रेष्ठं नैतच्छरणमुत्तमम् ।
नैतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते ।।

*Divyāvadāna* 164

यस्तु बुद्धं च धर्मं च संघं च शरणं गतः ।
आर्यसत्यानि चत्वारि पश्यति प्रज्ञया यदा ।।

ibid.

दुःखं दुःखसमुत्पन्नं निरोधं समतिक्रमम् ।
आर्यं चाष्टांगिकं मार्गं क्षेमं निर्वाणगामिनाम् ।।

ibid.

एत[द्वै]शरणं श्रेष्ठमेतच्छरणमुत्तमम् ।
एतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते ।।

ibid.

यानिमान्यपविद्धानि विक्षिप्तानि दिशो दश ।
कपोतवर्णान्यस्थीनि तानि दृष्ट्वेह का रतिः ।।

ibid. 561

इमानि यानि उपस्थानानि अलाबुरिव सेरभे ।
शंखवर्णानि शीर्षाणि तानि दृष्ट्वेह का रतिः ।

ibid.

किं कुर्यात् उदपानेन आपश्चेत् सर्वतो यदि ।
छित्त्वेह मूलं तृष्णायाः कस्य पर्येषणां चरेत् ।।

ibid. 56

यथा हि माता प्रियमेकपुत्रकं
ह्यवेक्षते रक्षति चास्य जीवितम् ।
तथैव वैनेयजनं तथागतो
ह्यवेक्षते रक्षति चास्य सन्ततिम् ।।

ibid. 96

सर्वज्ञसन्ताननिवासिनी हि
कारुण्यधेनुर्मृगयत्यखिन्ना ।
वैनेयवत्सान् भवदुःखनष्टान्
वत्सान् प्रणष्टान् इव वत्सला गौः ।।

ibid.

धन्यास्ते पुरुषा लोके ये बुद्धं शरणं गताः।
निर्वृतिं ते गमिष्यन्ति बुद्धकारकृतौ जनाः।।

*Divyāvadāna* 1

येऽल्पानपि जिने कारान् करिष्यन्ति विनायके।
विचित्रं स्वर्गमागम्य ते लप्स्यन्तेऽमृतं पदम्।।

ib

न कार्षापणवर्षेण तृप्तिः कामेषु विद्यते।
अल्पास्वादान् बहुदुःखान् कामान् विज्ञाय पण्डितः।।

ibid. 224

अपि दिव्येषु कामेषु रतिं नैवाधिगच्छति।
तृष्णाक्षये रतो भवति सम्यक्सम्बुद्धश्रावकः।।

ibid.

पर्वतोऽपि सुवर्णस्य समो हिमवता भवेत्।
नालमेकस्य तद्वित्तमिति विद्वान् समाचरेत्।।

ibid.

यः प्रेक्षति दुःखमितो निदानं कामेषु जातु स कथं रमेत।
लोके हि शल्यमुपधिं विदित्वा तस्यैव धीरो विनयाय शिक्षेत्।।

ibid.

संसेवमानस्य भवन्ति स्नेहाः स्नेहान्वयं संभवतीह दुःखम्।
आदीनवं स्नेहगतं विदित्वा एकश्चरेत् खड्गविषाणकल्पः।।

ibid. 294

कर्मात्मकं लोकमिदं विदित्वा दुःखात्मकं चापि जनं हि मत्वा।
मत्वा च लोकं प्रियविप्रयोगं कर्तुं प्रिये नार्हसि बाष्पमोक्षम्।।

ibid. 413

मोहसंवर्धनो लोको भव्यरूप इव दृश्यते।
उपधिबन्धना बालास्तमसा परिवारिताः।।

ibid. 534

मन्त्रैर्हि यदि लभ्येत अङ्गतो गगनं द्विजः।
कृष्णशुक्लानि कर्माणि भवेयुर्निष्फलानि हि।।

ibid. 653

यस्मात् कृष्णानि शुक्लानि कर्माणि सफलानि हि।
पच्यमानानि दृश्यन्ते गतिष्वेतानि पंचसु।।

*Divyāvadāna* 653

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्।।

*Gilgit Manuscripts* III. i. 108

अलज्जितव्ये लज्जिनो लज्जितव्ये अलज्जिनः।
अभये भयदर्शिनो भये चाभयदर्शिनः।
मिथ्यादृष्टिसमादानात् सत्त्वा गच्छन्ति दुर्गतिम्।।
अलज्जितव्येऽलज्जिनो लज्जितव्ये च लज्जिनः।
अभयेऽभयदर्शिनो भये च भयदर्शिनः।
सम्यग्दृष्टिसमादानात् सत्त्वा गच्छन्ति सद्गतिम्।।

ibid. 220

## MAUNEYA-SŪTRAM

## मौनेय-सूत्रम्

मौनेयं च पृच्छसि नाल दुःकरं दुरभिसंभुणम्।
हन्त ते तं च वक्ष्यामि संस्तम्भस्व दृढो भव।।

*Mahāvastu* III. 387

समानभागं कुर्यासि ग्रामे आक्रुष्टवन्दितम्।
मनोप्रदोषं रक्षेसि क्षान्तो चानुमतो भव।।

ibid.

उच्चावचा निश्चरन्ति दावे अग्निशिखा इव।
नारी मुनिप्रलोभाये ताव तं मा प्रलोभये।।

ibid.

विरतो मैथुना धर्मा हित्वा कामं परोवरम्।
अविरुद्धो असंरुद्धो ये सत्त्वा त्रसस्थावराः।।

ibid.

यथात्मनो तथान्येषां यथान्येषां तथान्मनो।
आत्मानं उपमां कृत्वा नैव हिंसे न घातये।।

ibid.

हित्वामिह अल्पिच्छां पि अनिच्छो भोहि निर्वृतो ।
त्यज इच्छां च लोभं च यत्र सक्ता पृथग्जनाः ।
पण्डितो प्रतिपज्जेय सो तरे नरकं इमम् ।।

*Mahāvastu* III. 387

ततो रात्रिविवासातो ग्रामं पिण्डाय ओतरे ।
आह्वयं नाभिनन्देय अभिहारं च ग्रामतो ।।

ibid.

न मुनि ग्राममासाद्य कुलेषु सहसा चरे ।
घासेषी न छिन्नकथो न वाचा प्रेप्सुतां भणे ।।

ibid. 387-8

स पात्रपाणी विचरेया अमूगो मूगसंमतो ।
तं तं दानं न निन्देया दातारं नावजानिथा ।।

ibid. 388

अदासि इति ते साधु नादासि भद्रमस्तु ते ।
उभयेनैव सदृशो रुक्षत्वं विनिवर्तये ।।

ibid.

सो पिण्डचारं चरित्वा वनान्तं अभिरक्षये ।
ऊनोदरो मिताहारो अल्पेच्छो स्यादलोलुपः ।।

ibid.

सो वृक्षमूलोपगतो आसनोपगतो मुनि ।
ध्यापयति अतो भव्यं आत्मानं नातितोषये ।।

ibid.

यस्यात्र सरिता नास्ति च्छिन्नश्रोतस्य भिक्षवः ।
कृत्याकृत्यप्रहीणस्य परिदाघो न विज्जति ।।

ibid.

एवं लयनमाख्यातं संबुद्धेन प्रजानता ।
एको व अभिरमिष्यसि एवं गमिष्यसि दिशो दश ।।

ibid.

एवं मौनेयं उपेष्यसि क्षुरधारोपमो भव ।
जिह्वाय तालुमासाद्य तादृशो संयतो भव ।।

ibid.

निरामगन्धो असितो वृक्षमूलपरायणो ।
एकासनस्य शिक्षासि श्रमणोपासनस्य च ।।

*Mahāvastu* III. 388

श्रुत्वा ऋजुरहं ध्यानं ध्यायिनां कामचागिनाम् ।
ततो हिरिं च श्रद्धां च भूयो शिक्षेय मामको ।।

ibid. 379-80

न पारं द्विगुणायति नापि चैवं गुणायति ।
उच्चावचा प्रतिपदा श्रामण्येन प्रकाशिता ।।

ibid. 379

तं नदीषु विजानाति रन्ध्रेषु प्रदरेषु च ।
सन्नादयति खु ओघो शान्त एव महोदधिः ।।

ibid.

यं ऊनकं तं स्वनति तं पुरं शान्तमेव तम् ।
ऊनकुम्भोपमो बालो ह्रदपूरो व पण्डितः ।।

ibid. 389

यो मुनी बहु भाषति उपेतं अर्थसंहितम् ।
निर्वाणं साक्षात्कुर्याय जानन्तो बहु भाषति ।।

ibid.

यो च धीरो मितभाणी जानन्तो न बहु भाषति ।
स मुनी मौनमर्हति स मुनी मौनमध्यगात्ति ।।

ibid.

## KHAḌGAVIṢĀṆA-SŪTRAM

## खड्गविषाण-सूत्रम्

आरब्धवीर्या सततानुयोगी
उदग्रचित्ता अकुशीदवर्ती ।
दृढविक्रमा वीर्यबलोपपेता
एकचरा खड्गविषाणकल्पा ।।

*Mahāvastu* I. 357-8

[मैत्री]मुपेक्षां करुणां च भाव्य
आसेवमानो मुदितां च काले।
मैत्रेण चित्तेन हितानुकंपी
एको चरे खड्गविषाणकल्पो ।।

*Mahāvastu* I. 357-8

सर्वेषु प्राणेषु निधाय दण्डं
अविहेठको अन्यतरे पि तेषाम् ।
निक्षिप्तदण्डो त्रसस्थावरेषु
एको चरे खड्गविषाणकल्पो ।।

ibid.

ओतारयित्वा गृहिव्यंजनानि
संशीर्णपत्रो यथ पारिपात्रो।
काषायवस्त्रो अभिनिष्क्रमित्वा
एको चरे खड्गविषाणकल्पो ।।

ibid.

संदारयित्वा गृहिव्यंजनानि
शिखिर्यथा भस्मनि एकचारी।
काषायवस्त्रो अभिनिष्क्रमित्वा
एको चरे खड्गविषाणकल्पो ।।

ibid. 358-9

संसेवमानस्य सियातिस्नेहो
स्नेहान्वयं दुःखमिदं प्रभोति।
संसेवमानं तु जुगुप्समानो
एको चरे खड्गविषाणकल्पो ।।

ibid.

संसेवमानस्य सियातिस्नेहो
स्नेहान्वयं दुःखमिदं प्रभोति।
प्रियातिस्नेहं विजिगुप्समानो
एको चरे खड्गविषाणकल्पो ।।

ibid.

संसेवमानस्य सियातिस्नेहो
स्नेहान्वयं दुःखमिदं प्रभोति।
प्रिया वियोगं विजिगुप्समानो
एको चरे खड्गविषाणकल्पो।।

*Mahāvastu* I. 359

संसेवमानस्य सियातिस्नेहो
स्नेहान्वयं दुःखमिदं प्रभोति।
मित्रेषु आदीनवं संमृशन्तो
एको चरे खड्गविषाणकल्पो।।

ibid.

संसेवमानस्य सियातिस्नेहो
स्नेहान्वयं दुःखमिदं प्रभोति।
पुत्रेषु आदीनव संमृशन्तो
एको चरे खड्गविषाणकल्पो।।

ibid.

पुत्रां सहायानवलोकयन्तो
हापेति अर्थं प्रतिबद्धचित्तो।
न पुत्रमिच्छेय कुतो सहायान्
एको चरे खड्गविषाणकल्पो।।

ibid.

ज्ञातीं सहायानवलोकयन्तो
हापेति अर्थं प्रतिबद्धचित्तो।
ज्ञाती न इच्छेय कुतो सहायां
एको चरे खड्गविषाणकल्पो।।

ibid.

## DHANIYA-SŪTRAM

## धनिय-सूत्रम्

मारः

नन्दति पुत्रेहि पुत्रिमां
गोमिको गोहि तथैव नन्दति।
उपधीहि नन्दति जनो
न हि सो नन्दति यो निरुपधिः॥

*Mahāvastu* III. 417

बुद्धः

शोचति पुत्रेहि पुत्रिमां
गोमिको गोहि तथैव शोचति।
उपधीहि जनो प्रबाधितो
न हि शोचति यो निरुपधिः॥

ibid. 418

## RATANA-SŪTRAM

## रतन-सूत्रम्

नमोऽस्तु बुद्धाय नमोऽस्तु बोधये
नमो विमुक्ताय नमो विमुक्तये।
नमोऽस्तु ज्ञानस्य नमोऽस्तु ज्ञानिनो
लोकाग्रश्रेष्ठाय नमो करोथ॥

यानीह भूतानि समागतानि
भूम्यानि वा यानि व अन्तरीक्षे।
सर्वाणि वा आत्तमनानि भूत्वा
शृण्वन्तु स्वस्त्ययनं जिनेन भाषितम्॥

इमस्मिं वा लोके परस्मिं वा पुनः
स्वर्गेषु वा यं रतनं प्रणीतम्।

*Mahāvastu* I. 290

न तं समं अस्ति तथागतेन
देवातिदेवेन नरोत्तमेन।
इमं पि बुद्धे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा॥

यं बुद्धश्रेष्ठो परिवर्णये शुचिं
यमाहु आनन्तरियं समाधिं
समाधिनो तस्य समो न विद्यते।
इदं पि धर्मे रतनं प्रणीत
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा॥

ये पुद्गला अष्ट सदा प्रशस्ता
चत्वारि एतानि युगानि भोन्ति।
ते दक्षिणीया सुगतेन उक्ताः
एतानि दिन्नानि महत्फलानि।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा॥

सर्वैव यस्य दर्शनसंपदायो
त्रयोऽस्य धर्मा जहिता भवन्ति।
सत्कायदृष्टी-विचिकित्सितं च
शीलव्रतं चापि यदस्ति किंचित्।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा॥

*Mahāvastu* I. 290-92

किंचापि शैक्षो प्रकरोति पापं
कायेन वाचा अथ चेतसापि।
अभव्यो सो तस्य निगूहनाय
अभव्यता दृष्टपथेषु उक्ता।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

यथेन्द्रकीलो पृथिवीसन्निश्रितो स्या
चतुर्भि वातेहि असंप्रकम्पि।
तथोपमं सत्पुरुषं वदेमि
यो आर्यसत्यानि सुदेशितानि
गम्भीरअर्थानि अवेत्य पश्यति।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

ये आर्यसत्यानि विभावयन्ति
गम्भीरप्रज्ञेन सुदेशितानि।
किंचापि ते भोन्ति भृशं प्रमत्ता
न ते भवां अष्ट उपादियन्ति।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

ये युक्तयोगी मनसा सुच्छन्दसा
नैष्क्रम्यिणो गौतमशासनस्मिं।
ते प्राप्तिप्राप्ता अमृतं विगाह्य
विमुक्तचित्ता निर्वृतिं भुंजमाना।

*Mahāvastu* I 292-93

इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

क्षीणं पुराणं नवो नास्ति संचयो
विमुक्ता आयतिकें भवस्मिं ।
ते क्षीणबीजा अविरूढिधर्मा
निर्वान्ति धीरा यथ तैलदोपा ।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

अग्निर्यथा प्रज्वलितो निषीदे
इन्धनक्षया शाम्यति वेगजातो ।
एवंविधं ध्यायिनो बुद्धपुत्राः
प्रज्ञाय रागानुशयं ग्रहेत्वा
अदर्शनं मृत्युराजस्य यान्ति ।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

ग्रीष्माणमासे प्रथमे चैत्रस्मिं
वने प्रगुल्मा यथ पुष्पिताग्रा
वातेरिता ते सुरभिं प्रवान्ति ।
एवंविधं ध्यायिनो बुद्धपुत्राः
शीलेनुपेता सुरभिं प्रवान्ति ।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

*Mahāvastu* I. 293-4

यानीह भूतानि समागतानि
भूम्यानि वा यानि व अन्तरीक्षे ।
मैत्रीकरोन्तु सद मनुष्यका प्रजा
दिवं च रात्रिं च हरन्ति वो बलिम् ।।
तस्माद्धि तं रक्षथ अप्रमत्ता
माता व पुत्रं अनुकम्पमाना ।
इदं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

विपश्यिस्मिं विश्वभुवि क्रकुच्छन्दे
भामकनकमुनिस्मिं काश्यपे
महायशे शाक्यमुनिस्मिं गौतमे ।
एतेहि बुद्धेहि महर्द्धिकेहि
या देवता सन्ति अभिप्रसन्ना ।
वाढं पि तं रक्षयन्तु च करोन्तु
स्वस्त्ययनं मानुषिकप्रजाये ।।
तस्मा हि तं रक्षथ अप्रमत्ता
माता व पुत्रं अनुकम्पमाना ।
एतं पि संघे रतनं प्रणीतं
एतेन सत्येन सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

यो धर्मचक्रं अभिभूय लोकं
प्रवर्तयति सर्वभूतनुकम्पितं ।
एतादृशं देवमनुष्यश्रेष्ठं
बुद्धं नमस्यामि सुस्वस्ति भोतु ।

*Mahāvastu* I. 294-5

धर्मं नमस्यामि सुस्वस्ति भोतु
संघं नमस्यामि सुस्वस्ति भोतु
मनुष्यतो वा अमनुष्यतो वा ।।

*Mahāvastu* I. 295

## PSALMS OF KAINEYA

## कैनेयगाथा

राजाहमस्मि शैलेति धर्मराजो ह्यनुत्तरः ।
धर्मेण चक्रं वर्तये इहाहं भूमिमण्डले ।।

*Gilgit Manuscripts* III. i. 275

कल्योऽस्म्यहं कुले जातः क्षत्रियोऽस्म्यभिजातितः ।
वित्रास्य सबलं मारं प्राप्तः सम्बोधिमुत्तमाम् ।।

ibid.

स्मृतिर्ब्राह्मणचक्रं मे प्रज्ञा मे परिनायकः ।
वीर्यं हयः शीघ्रजवो धुरं वहति चोदितः ।।

ibid.

समाधिर्मे मणिश्रेष्ठो ह्यन्धकारे प्रभाकरः ।
उपेक्षा हस्तिनागश्च धुरं वहति चोदितः ।।

ibid.

स्त्री वै रतिः सरागाणां प्रीतिर्ब्राह्मण मे रतिः ।
प्रसृष्टं ब्राह्मण श्रेष्ठं धनं गृहगतं मया ।।

ibid.

सप्त बोध्यङ्गरत्नानि सर्वलोकातिगानि ते ।
प्रबोधयामि यैः सुप्तामन्धभूतामिमां प्रजाम् ।।

ibid. 276

जिता मया दिशः सर्वाः प्रतिशत्रुर्न विद्यते ।
चतस्रो मे पर्षदश्च चतुरङ्गं बलं मम ।।

ibid.

अध्यावसामि नगरं पूर्वबुद्धनिषेवितम् ।
रिद्धयारामोपसंपन्नं मार्गनिर्मितचत्वरम् ।।

*Gilgit Manuscripts* III. i. 276

सूत्रान्तजातकाकीर्णं महापुरुषसेवितम् ।
त्रयो विमोक्षद्वाराणि स्मृत्यारक्षाभिगोपितम् ।।

ibid.

ह्री-व्यपत्राप्यसंपन्नः अहं राजा तथागतः ।
धर्मयुद्धं मया दत्तं धर्मभेरी पराहता ।।

ibid.

वित्रास्य सबलं मारमभिषिक्तोऽस्मि बोधये ।
सुभाविता अप्रमाणाः सन्ति चाभरणानि मे ।।

ibid.

ब्राह्मा विहाराश्चत्वारः क्लेशानां परिवारणाः ।
परप्रवादा विहता विध्वस्ता विरूढीकृताः ।।

ibid.

मम सम्यक्त्वं लोकेऽस्मिन्नालोकं प्राणिनां ददत् ।
छिन्न दृग् ज्ञानशस्त्रेण विवेकश्चायुधं मम ।।

ibid.

रिद्धिपादः अवस्थानं शमथो मुष्टिसंग्रहः ।
शीलरथो नन्दिघोषः सारथिर्मे विपश्यनः ।।

ibid.

सन्नाहः क्षान्तिः सौरत्यं संग्रामो मार्गभावनः ।
कलापः पञ्चेन्द्रियाणि येभिर्निवरणं हतम् ।।

ibid.

चत्वारः सम्यक्प्रहाणा येभिः क्लेशा निसूदिताः ।
शूरयुद्धं मया दत्तं धर्मभेरी मयाहता ।
वित्रास्य सबलं मारमभिषिक्तोऽस्मि बोधये ।।

ibid. 276

अविद्यां विद्यया हत्वा स्कन्धानामुदयव्ययम् ।
संग्रामशीर्षमुत्तीर्णो बुद्धोऽहं बोधये प्रजाम् ।।

ibid.

त्रयो लोके महाचौरा यौरियं बाध्यते प्रजा।
रागो द्वेषश्च मोहश्च सर्वे ते नाशिता मया।।

*Gilgit Manuscript* III. i. 277

अर्हंश्च दक्षिणेयोऽस्मि षडभिज्ञो बलोद्यतः।
सुक्षेत्रे प्रतिपन्नानामाहुतीनां प्रतिग्रहः।।

ibid.

आरभ्य परमं वीर्यमास्रवा निहता मया।
महान्तमोघमुत्तीर्णो मुह्यमानेष्ववस्थितः।।

ibid.

दंष्ट्रावली यथा सिंह आसाद्य प्राणिनो वने।
समं तेषु प्रहरति बाल्ये मध्ये महल्लके।।

ibid.

तथैव लोके संबुद्धो नरसिंहो विनायकः।
समं धर्मं प्रकाशयति बालमध्यमहात्मसु।।

ibid.

## EULOGY OF THE VOW FOR BODHI

## बोधिप्रणिधिस्तवः

श्रवणं तर्पयति ते प्रसादयति दर्शनम्।
वचनं ह्लादयति ते विमोचयति शासनम्।।

*Mātṛceta: Śatapañcaśatka* 103

प्रसूतिर्हर्षयति ते वृद्धिर्नन्दयति प्रजाः।
प्रवृत्तिरनुगृह्णाति निवृत्तिरुपहन्ति च।।

ibid. 104

कीर्तनं किल्बिषहरं स्मरणं ते प्रमोदनम्।
अन्वेषणं मतिकरं परिज्ञानं विशोधनम्।।

ibid.

श्रीकरं तेऽभिगमनं सेवनं धीकरं परम् ।
भजनं निर्भयकरं शंकरं पर्युपासनम् ।।

ibid. 105

शीलोपसम्पदा शुद्धः प्रसन्नो ध्यानसम्पदा ।
त्वं प्रज्ञासम्पदाक्षोभ्यो ह्रदः पुण्यमयो महान् ।।

ibid. 106

रूपं द्रष्टव्यरत्नं ते श्रव्यरत्नं सुभाषितम् ।
धर्मो विचारणारत्नं गुणरत्नाकरो ह्यसि ।।

ibid. 107

त्वं ओघैरुह्यमानानां द्वीपस्त्राणं क्षतात्मनाम् ।
शरणं भवभीरूणां मुमुक्षूणां परायणम् ।।

ibid.

सत्पात्रं शुद्धवृत्तत्वात् सत्क्षेत्रं फलसम्पदा ।
सन्मित्रं हितकारित्वात् सर्वप्राणभृतामसि ।।

ibid. 108

प्रियस्त्वं उपकारित्वात् सुरतत्वान् मनोहरः ।
एकान्तकान्तः सौम्यत्वात् सर्वैर्बहुमतो गुणैः ।।

ibid. 109

हृद्योऽसि निरवद्यत्वाद् रम्यो वाग्रूपसौष्ठवात् ।
धन्यः सर्वार्थसिद्धत्वान् मंगल्यो गुणसंश्रयात् ।।

ibid. 110

## EULOGY OF THE PATH TO BODHI

## बोधिमार्गावतारस्तवः

स्थायिनां त्वं परिक्षेप्ता विनियन्तापहारिणाम् ।
समाधाता विजिह्मानां प्रेरको मन्दगामिनाम् ।।

ibid. 111

नियोक्ता धुरि दान्तानां खटुंकानामुपेक्षकः।
अतोऽसि नरदम्यानां सत्सारथिरनुत्तरः॥

*Mātṛceta* 112

आपन्नेष्वनुकम्पा ते प्रस्वस्थेष्वर्थकामता।
व्यसनस्थेषु कारुण्यं सर्वेषु हितकामता॥

ibid.

विरुद्धेष्वपि वात्सल्यं प्रवृत्तिः पतितेष्वपि।
रौद्रेष्वपि कृपालुत्वं का नामेयं तवार्यता॥

ibid. 113

गुरुत्वमुपकारित्वान् मातापित्रोर्यदीष्यते।
के दानीमस्तु गुरुता त्वय्यत्यन्तोपकारिणि॥

ibid. 114

स्वकार्यनिरपेक्षाणां विरुद्धानामिवात्मनाम्।
त्वं प्रपाततटस्थानां प्राकारत्वमुपागतः॥

ibid. 115

लोकद्वयोपकाराय लोकातिक्रमणाय च।
तमोभूतेषु लोकेषु प्रज्ञालोकः कृतस्त्वया॥

ibid. 116

भिन्ना देवमनुष्याणामुपभोगेषु वृत्तयः।
धर्मसम्भोगसामान्यात् त्वय्यसंभेदमागताः॥

ibid.

उपपत्तिवयोवर्णदेशकालनिरत्ययम्।
त्वया हि भगवन् धर्मं सर्वातिथ्यमिदं कृतम्॥

ibid. 117

अविस्मितान् विस्मितवत् स्पृहयन्तो गतस्पृहान्।
उपासते प्राञ्जलयः श्रावकानपि ते सुराः॥

ibid. 118

अहो संसारमण्डस्य बुद्धोत्पादस्य दीप्तता।
मानुष्यं यत्र देवानां स्पृहणीयत्वमागतम्॥

ibid. 119

## EULOGY OF THE BUDDHA

### बुद्धस्तवः

वन्दामि ते कनकवर्णनिभा वरलक्षणा विमलचन्द्रमुखा।
वन्दामि ते असमज्ञानपरा सदृशो न तेऽस्ति त्रिभवे विरजा।।

*Śikṣāsamuccaya* 318

मृदु चारु स्निग्ध शुभ केश नखा गिरिराजतुल्य तव चोष्णिरिह।
नोष्णीषमीक्षितु तवास्ति समो विभ्राजते भ्रुवि तवोर्ण मुने।।

ibid.

कुन्देन्दुशङ्खहिमशुभ्रनिभा नीलोत्पलाभशुभनेत्रवरा।
कृपयेक्षसे जगदिदं हि यया वन्दामि ते विमलनेत्र जिन।।

ibid.

जिह्वा प्रभूत तनु ताम्रनिभा वदनं च छादयसि येन स्वकम्।
धर्मं वदन्विनयसे च जगत् वन्दामि मधुरस्निग्धगिरा।।

ibid.

दशनाः शुभाः सुदृढ वज्रनिभाः त्रिंशद्दशाप्यविरलाः सहिताः।
कुर्वन्स्मितं विनयसे च जगत् वन्दामि ते मधुरसत्यकथा।।

ibid.

रूपेण चाप्रतिसमोऽसि जिनः प्रभया च भासयसि क्षेत्रशतान्।
ब्रह्मेन्द्रपालजगतो भगवन् जिह्मीभवन्ति तव ते प्रभया।।

ibid.

एणेय जङ्घ भगवन्नसमा गजराजबर्हिमृगराजगतो।
ईक्षन्व्रजस्यपि युगं भगवन् संकम्पयब्धरणिशैलतटान्।।

ibid. 319

कायश्च लक्षणचितो भगवन् सूक्ष्म छवी कनकवर्णनिभा।
नेक्षञ्जगद् व्रजति तृप्तिमिदं रूपं तवाप्रतिमरूपधर।।

ibid.

# EXPEDIENTS ADOPTED BY BUDDHAS

## जिनानामुपायकौशल्यम्

विस्पष्टु भाषस्व जिनान उत्तमा सन्तीह पर्षाय सहस्र प्राणिनाम् ।
श्राद्धाः प्रसन्नाः सुगते सगौरवा ज्ञास्यन्ति ये धर्ममुदाहृतं ते ।।

*Saddharmapuṇḍarīka* 28

अलं हि धर्मेणिह भाषितेन सूक्ष्मं इदं ज्ञानमतर्किकं च ।
अभिमानप्राप्ता बहु सन्ति बाला निर्दिष्टधर्मस्मि क्षिपे अजानकाः ।।

ibid. 29

शृणोहि मे शारिसुता यथैष संबुद्धधर्मः पुरुषोत्तमेहि ।
यथा च बुद्धा कथयन्ति नायका उपायकौशल्यशतैरनेकैः ।।

ibid. 33

सूत्राणि भाषामि तथैव गाथा इतिवृत्तकं जातकमद्भुतञ्च ।
निदान औपम्यशतैश्च चित्रैर्गेयञ्च भाषामि तथोपदेशान् ।।

ibid. 34

ये भोन्ति हीनाभिरता अविद्वसू अचीर्णचर्या बहुबुद्धकोटिषु ।
संसारलग्नाश्च सुदुःखिताश्च निर्वाण तेषामुपदर्शयामि ।।

ibid.

भवन्ति ये चेह सदा विशुद्धा व्यक्ता शुची सूरत बुद्धपुत्राः ।
कृताधिकारा बहुबुद्धकोटिषु वैपुल्यसूत्राणि वदामि तेषाम् ।।

ibid.

उपायकौशल्य ममैव रूपं यत् त्रीणि यानान्युपदर्शयामि ।
एकं तु यानं हि नयश्च एक एका चियं देशन नायकानाम् ।।

ibid. 36

व्यपनेहि काङ्क्षां तथ संशयं च येषां च केषां चिह काङ्क्ष विद्यते ।
अनन्यथावादिन लोकनायका एकं इदं यानु द्वितीयु नास्ति ।।

ibid.

ये चापि सत्त्वास्तहि तेष संमुखं शृण्वन्ति धर्मं अथ वा श्रुताविनः ।
दानञ्च दत्तं चरितञ्च शीलं क्षान्त्या च संपादित सर्वचर्याः ।।

ibid.

वीर्येण ध्यानेन कृताधिकाराः प्रज्ञाय वा चिन्तित एति धर्माः ।
विविधानि पुण्यानि कृतानि येहि ते सर्वि बोधाय अभूषि लाभिनः ।।

*Saddharmapuṇḍarīka* 37

## THREE COURSES ESSENTIALLY ONE

## त्रियानमेकयानम्

धर्मराजा अहं लोक उत्पन्नो भवमर्दनः ।
धर्मं भाषामि सत्त्वानामधिमुक्तिं विजानिय ।।

ibid. 91

संतर्पयामी इमु सर्वलोकं मेघो व वारिं सम मुञ्चमानः ।
आर्येषु नीचेषु च तुल्यबुद्धिर्दुःशीलभूतेष्वथ शीलवत्सु ।।

ibid. 93

विनष्टचारित्र तथैव ये नराश्चारित्र-आचारसमन्विताश्च ।
दृष्टिस्थिता ये च विनष्टदृष्टी सम्यग्दृशो ये चाविशुद्धदृष्टयः ।।

ibid.

हीनेषु चोत्कृष्टमतीषु चापि मृद्विन्द्रियेषु प्रवदामि धर्मम् ।
किलासितां सर्व विवर्जयित्वा सम्यक् प्रमुञ्चाम्यहु धर्मवर्षम् ।।

ibid.

यथाबलं च श्रुणियान मह्यं विविधासु भूमीषु प्रतिष्ठहन्ति ।
देवेषु मर्त्येषु मनोरमेषु शक्रेषु ब्रह्मेष्वथ चक्रवर्तिषु ।।

ibid. 93

क्षुद्रानुक्षुद्रा इम ओषधीयो क्षुद्रीक एता इह याव लोके ।
अन्या च मध्या महती च ओषधी श्रृणोथ ताः सर्व प्रकाशयिष्ये ।।

ibid.

अनास्रवं धर्म प्रजानमाना निर्वाणप्राप्ता विहरन्ति ये नराः ।
षडभिज्ञत्रैविद्य भवन्ति ये च सा क्षुद्रिका ओषधि संप्रवुत्ता ।।

ibid.

गिरिकन्दरेषू विहरन्ति ये च प्रत्येकबोधिं स्पृहयन्ति ये नराः ।
ये ईदृशा मध्यविशुद्धबुद्धयः सा मध्यमा ओषधि संप्रवुत्ता ।।

ibid.

ये प्रार्थयन्ते पुरुषर्षभत्वं बुद्धो भविष्ये नरदेवनाथः।
वीर्यं च ध्यानं च निषेवमाणाः सा ओषधी अग्र इयं प्रवुच्चति ।।

*Saddharmapuṇḍarīka* 93

ये चापि युक्ताः सुगतस्य पुत्रा मैत्रीं निषेवन्तिह शान्तचर्याम्।
निष्कांक्षप्राप्ता पुरुषर्षभत्वे अयं द्रुमो वुच्यति एवरूपः ।।

ibid.

अविवर्तिचक्रं हि प्रवर्तयन्ता ऋद्धीबलस्मिन् स्थित ये च धीराः।
प्रमोचयन्तो बहुप्राणिकोटी महाद्रुमो सो च प्रवुच्चते हि ।।

ibid.

समश्च सो धर्म जिनेन भाषितो मेघेन वा वारि समं प्रमुक्तम्।
चित्रा अभिज्ञा इम एवरूपा यथौषधीयो धरणीतलस्थाः ।।

ibid.

अनेन दृष्टान्तनिदर्शनेन उपायु जानाहि तथागतस्य।
यथा च सो भाषति एकधर्मं नानानिरुक्ती जलबिन्दवो वा ।।

ibid.

चन्द्रसूर्यप्रभा यद्वन्निपतन्ति समं नृषु।
गुणवत्स्वथ पापेषु प्रभाया नोनपूर्णता ।।

ibid. 98

तथागतस्य प्रज्ञाभासमा ह्यादित्यचन्द्रवत्।
सर्वसत्त्वान् विनयते न चोना नैव चाधिका ।।

ibid.

यथा कुलालो मृद्भाण्डं कुर्वन् मृत्सु समास्वपि।
भवन्ति भाजना तस्य गुडक्षीरघृताम्भसाम् ।।

ibid.

अशुचेः कानिचित्तत्र दध्नोऽन्यानि भवन्ति तु।
मृदमेकां स गृह्णाति कुर्वन् भाण्डानि भार्गवः ।।

ibid.

यादृक् प्रक्षिप्यते द्रव्यं भाजनं तेन लक्ष्यते।
सत्त्वाविशेषेऽपि तथा रुचिभेदात्तथागताः ।।

ibid.

यानभेदं वर्णयन्ति बुद्धयानं तु निश्चितम् ।
संसारचक्रस्याज्ञानान्निर्वृतिं न विजानते ।।

*Saddharmapuṇḍarīka* 98

## TWO TYPES OF TEACHING

## द्विविधा धर्मदेशना

स्कन्धाश्च पुदगला धर्माः स्वसामान्या अलक्षणाः ।
प्रत्ययानीन्द्रियाश्चैव श्रावकाणां वदाम्यहम् ।।

*Laṅkāvatāra* 333

अहेतु चित्तमात्रं च विभूति भूमयस्तथा ।
प्रत्यात्मतथतां शुद्धां देशयामि जिनौरसान् ।।

ibid.

सूत्रविनयाभिधर्मेण विशुद्धिं कल्पयन्ति ये ।
ग्रन्थतो न तु अर्थेन न ते नैरात्म्यमाश्रिताः ।।

ibid. 290

अनित्यं त्रिभवं शून्यमात्मात्मीयविवर्जितम् ।
श्रावकाणां च देशेमि तथा सामान्यलक्षणम् ।।

ibid. 291

सर्वधर्मेष्वसंसक्तिर्विवेका ह्येकचारिका ।
प्रत्येकजिनपुत्राणां फलं देशेम्यतर्किकम् ।।

ibid.

अनागतमतीतं च निर्वाणं पुद्गलं वचः ।
संवृत्या देशयाम्येतान्परमार्थस्त्वनक्षरः ।।

ibid. 294

नैकायिकाश्च तीर्थ्याश्च दृष्टिमेकांशमाश्रिताः ।
चित्तमात्रे विसंमूढा भावं कल्पेन्ति बाहिरम् ।।

ibid.

चित्राचार्यो यथा कश्चिच्चित्रान्तेवासिकोऽपि वा ।
चित्रार्थे नामयेद्रङ्गं देशनापि तथा मम ।।

ibid. 316

रंगे न विद्यते चित्रं न कुडये न च भाजने।
सत्त्वानां कर्षणार्थाय रंगैश्चित्रं विकल्प्यते।।

*Laṅkāvatāra* 316

देशनाव्यभिचारी च तत्त्वं ह्यक्षरवर्जितम्।
कृत्वा धर्मे व्यवस्थानं तत्त्वं देशेमि योगिनाम्।।

ibid.

## THE THREE COURSES

## यानत्रयम्

यानव्यवस्था नैवास्ति यानमेकं वदाम्यहम्।
परिकर्षणार्थं बालानां यानभेदं वदाम्यहम्।।

ibid. 321

यथा हि काष्ठमुदधौ तरङ्गैर्विप्रवाह्यते।
तथा च श्रावको मूढो लक्षणेन प्रवाह्यते।।

ibid.

देवयानं ब्रह्मयानं श्रावकीयं तथैव च।
ताथागतं च प्रत्येकं यानान्येतान्वदाम्यहम्।।

ibid.

यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्तते।
चित्ते तु वै परावृत्ते न यानं न च यायिनः।।

ibid. 322

स्कन्धाश्च पुद्गला धर्माः स्वसामान्या अलक्षणाः।
प्रत्ययानीन्द्रियाश्चैव श्रावकाणां वदाम्यहम्।।

ibid. 333

अहेतुचित्तमात्रं च विभूति भूमयस्तथा।
प्रत्यात्मतथतां शुद्धां देशयामि जिनौरसान्।।

ibid.

यस्तु शून्यान् विजानाति धर्मानात्मविवर्जितान्।
संबुद्धानां भगवतां बोधि जानाति तत्त्वतः।।

*Saddharmapuṇḍarika* 98

प्रज्ञामध्यव्यवस्थानात् प्रत्येकजिन उच्यते।
शून्यज्ञानविहीनत्वाच्छ्रावकः संप्रभाष्यते ।।

*Saddharmapuṇḍarika* 99

सर्वधर्मावबोधात्तु सम्यक् संबुद्ध उच्यते।
तेनोपायशतैर्नित्यं धर्मं देशेति प्राणिनाम् ।।

ibid.

तथैव श्रावकाः सर्वे प्राप्तनिर्वाणसंज्ञिनः।
जिनोऽथ देशयेत्तस्मै विश्रामोऽयं न निर्वृतिः ।।

ibid. 100

उपाय एष बुद्धानां वदन्ति यदिमं नयम्।
सर्वज्ञत्वमृते नास्ति निर्वाणं तत् समारभ ।।

ibid.

त्र्यध्वज्ञानमनन्तं च षट् च पारमिताः शुभाः।
शून्यतामनिमित्तं च प्रणिधानविवर्जितम् ।।

ibid.

बोधिचित्तं च ये चान्ये धर्मा निर्वाणगामिनः।
सास्रवानास्रवाः शान्ताः सर्वे गगनसंनिभाः ।।

ibid. 101

ब्रह्मविहाराश्चत्वारः संग्रहा ये च कीर्तिताः।
सत्त्वानां विनयार्थाय कीर्तिताः परमर्षिभिः ।।

ibid.

यश्च धर्मान् विजानाति मायास्वप्नस्वभावकान्।
कदलीस्कन्धनिःसारान् प्रतिश्रुत्का समानकान् ।।

ibid.

तत्स्वभावं च जानाति त्रैधातुकमशेषतः।
अबद्धमविमुक्तं च न विजानाति निर्वृतिम् ।।

ibid.

सर्वधर्मान् समान् शून्यान्निर्नानाकरणात्मकान्।
न चैतान् प्रेक्षते नापि किंचिद्धर्मं विपश्यति ।।

ibid.

स पश्यति महाप्रज्ञो धर्मकायमशेषतः ।
नास्ति यानत्रयं किंचिदेकयानमिहास्ति तु ।।
सर्वधर्माः समाः सर्वे समाः समसमाः सदा ।
एवं ज्ञात्वा विजानाति निर्वाणममृतं शिवम् ।।

*Saddharmapuṇḍarīka* 101

## TOPE AND IMAGE WORSHIP

## स्तूपविग्रहपूजा

ये चापि धातून् करोन्ति पूजां जिनान तेषां परिनिर्वृतानाम् ।
रत्नामयान् स्तूपसहस्रनेकान् सुवर्णरूप्यस्य च स्फाटिकस्य ।।
ये चाश्मगर्भस्य करोन्ति स्तूपान् कर्केतनं-मुक्तमयांश्च केचित् ।
वैडूर्यश्रेष्ठस्य तथैन्द्रनीले ते सर्वि बोधाय अभूषि लाभिनः ।।
रत्नामयां बिम्ब तथैव केचिद्द्वात्रिशंती-लक्षणरूपधारिणः ।
उद्दिश्य कारापित येहि चापि ते सर्वि बोधाय अभूषि लाभिनः ।।
ये सप्तरत्नामय तत्र केचिद् ये ताम्रिका वा तथ कांसिका वा ।
कारापयीषु सुगतान बिम्बा ते सर्वि बोधाय अभूषि लाभिनः ।।
ये चित्रभित्तीषु करोन्ति विग्रहान् परिपूर्णगात्राञ्शतपुण्यलक्षणान् ।
लिखेत् स्वयं चापि लिखापयेद्वा ते सर्वि बोधाय अभूषि लाभिनः ।।

ibid. 37-8

ध्वजच्छत्रवितानपताकवरां चूर्णानुलेपन गृहीत्व बहून् ।
पूजां करोथ सुगतस्य सदा न चिरेण लप्स्यथ समाधिवरम् ।।
वरगन्धमाल्यकुसुमा रुचिरां वादित्रतूर्य प्रगृहीत बहु ।
जिनस्तूपि पूज प्रकरोथ सदा न चिरेण लप्स्यथ समाधिवरम् ।।
पणवैः सुघोषकमृदङ्गशतैः पटहैर्विपंचितवरवेणुरवैः ।
मधुरस्वरर्विविधवाद्यगुणः पूजेथ नायकु प्रसन्नमनाः ।।
कारेथ बुद्धप्रतिमां रुचिरां रतनामयीं सुपरिकर्मकृताम् ।
प्रासादिकां परम-सुदर्शनीयां न चिरेण लप्स्यथ समाधिवरम् ।।

*Samādhirāja* 371-2

## BODHISATTVA'S MORAL OBLIGATIONS

### बोधिसत्त्वाचारः

ये चापि राजपुरुषाः कुर्यात्तेहि न संस्तवम् ।
चण्डालमुष्टिकैः शौण्डैस्तीर्थिकैश्चापि सर्वशः ।।
अधिमानीन्न सेवेत विनयेदागमे स्थितान् ।
अर्हन्तसंमतान् भिक्षून् दुःशीलांश्चैव वर्जयेत् ।।
भिक्षुणीं वर्जयेन्नित्यं हास्यसंलापगोचराम् ।
उपासिकाश्च वर्जेत प्राकटा या अवस्थिताः ।।
या निर्वृतिं गवेषन्ति दृष्टे धर्मे उपासिकाः ।
वर्जयेत् संस्तवं ताभिः आचारो अयमुच्यते ।।
यश्चैनमपसंक्रम्य धर्मं पृच्छेऽग्रबोधये ।
तस्य भाषेत् सदा धीरो अनोलीनो अनिश्रितः ।।
स्त्री-पण्डकाश्च ये सत्त्वाः संस्तवं तैर्विवर्जयेत् ।
कुलेषु चापि वधुकां कुमार्यश्च विवर्जयेत् ।।
न ताः संमोदयेज्जातु कौशल्यं हासु पृच्छितुम् ।
संस्तवं तेहि वर्जेत सौकरौरभ्रिकैः सह ।।
ये चापि विविधान् प्राणीन् हिंसेयुर्भोगकारणात् ।
मांसं सूनाय विक्रेन्ति संस्तवं तैर्विवर्जयेत् ।।
स्त्रीपोषकाश्च ये सत्त्वा वर्जयेत्तेहि संस्तवम् ।
नटेभिर्झल्लमल्लेभिर्ये चान्ये तादृशा जनाः ।।
वारमुख्या न सेवेत ये चान्ये भोगवृत्तिनः ।
प्रतिसंमोदनं तेभिः सर्वशः परिवर्जयेत् ।।
यदा च धर्मं देशेया मातृग्रामस्य पण्डितः ।
न चैकः प्रविशेत्तत्र नापि हास्यस्थितो भवेत् ।।
यदापि प्रविशेद् ग्रामं भोजनार्थी पुनः पुनः ।
द्वितीयं भिक्षु मार्गेत बुद्धं वा समनुस्मरेत् ।।

*Saddharmapuṇḍarika* 182-3

आचारगोचरो ह्येष प्रथमो मे निर्दशितः ।
विहरन्ति येन सप्रज्ञा धारेन्ता सूत्रमीदृशम् ।।
यदा न चरते धर्मं हीन उत्कृष्टमध्यमे ।
संस्कृतासंस्कृते चापि भूताभूते च सर्वशः ।।
स्त्रीति नाचरते धीरो पुरुषेति न कल्पयेत् ।
सर्वधर्म अजातत्वाद् गवेषन्तो न पश्यति ।।
आचारो हि अयं उक्तो बोधिसत्त्वान सर्वशः ।
गोचरो यादृशस्तेषां तं शृणोथ प्रकाशतः ।।
असन्तका धर्म इमे प्रकाशिता अप्रादुर्भूताश्च अजात सर्वे
शून्या निरीहा स्थित नित्यकानं अयं गोचरो उच्यति पण्डितानाम् ।।

*Saddharmapuṇḍarīka* 184

यश्च पारमिताः पञ्च समादायेह वर्तते ।
इदं ज्ञानं गवेषन्तो बुद्धज्ञानमनुत्तरम् ।।
कल्पकोटीसहस्राणि अष्टौ पूर्णानि युज्यते ।
दानं ददन्तो बुद्धेभ्यः श्रावकेभ्यः पुनः पुनः ।।
प्रत्येकबुद्धांस्तर्पेन्तो बोधिसत्त्वान कोटियः ।
खाद्यभोज्यान्नपानेहि वस्त्रशय्यासनेहि च ।।
प्रतिश्रयान् विहारांश्च चन्दनस्येह कारयेत् ।
आरामान् रमणीयांश्च चंक्रमस्थानशोभितान् ।।
एतादृशं ददित्वान दानं चित्रं बहूविधम् ।
कल्पकोटीसहस्राणि दत्त्वा बोधाय नामयेत् ।।
पुनश्च शीलं रक्षेत शुद्धं संबुद्धवर्णितम् ।
अखण्डं संस्तुतं विज्ञैर्बुद्धज्ञानस्य कारणात् ।।
पुनश्च क्षान्तिं भावेत दान्तभूमौ प्रतिष्ठितः ।
धृतिमान् स्मृतिमांश्चैव परिभाषाः क्षमे बहूः ।।
ये चोपलम्भिकाः सत्त्वा अधिमाने प्रतिष्ठिताः ।
कुत्सनं च सहेत्तेषां बुद्धज्ञानस्य कारणात् ।।

ibid. 219

नित्योद्युक्तश्च वीर्यस्मिन् अभियुक्तो दृढस्मृतिः ।
अनन्यमनसंकल्पो भवेया कल्पकोटियः ।।
अरण्यवासि तिष्ठन्तो चंक्रममभिरूह्य च ।
स्त्यानमिद्धं च वर्जित्वा कल्पकोटचो हि यश्चरेत् ।।
यश्च ध्यायी महाध्यायी ध्यानारामः समाहितः ।
कल्पकोटचः स्थितो ध्यायेत् सहस्राण्यष्टऽनूनकाः ।।
तेन ध्यानेन सो वीरः प्रार्थयेद् बोधिमुत्तमाम् ।
अहं स्यामिति सर्वज्ञो ध्यानपारमितां गतः ।।
विचिकित्सां च वर्जित्वा इञ्जिता मन्यितानि च ।
अधिमुच्येन्मुहूर्तं पि फलं तस्येदमीदृशम् ।।
यथा शाक्यमुनिर्नाथः शाक्यसिंहो महामुनिः ।
बोधिमण्डे निषीदित्वा सिंहनादमिदं नदेत् ।।
अहमप्यनागतेऽध्वानि सत्कृतः सर्वदेहिनाम् ।
बोधिमण्डे निषीदित्वा आयुं देशेष्यमीदृशम् ।।
अध्याशयेन संपन्नाः श्रुताधाराश्च ये नराः ।
संधाभाष्यं विजानन्ति काङक्षा तेषां न विद्यते ।।

*Saddharmapuṇḍarīka,* 219-20

शैलीकं मृन्मयं लोहं शांख्यं वै स्फटिकमयम् ।
पात्रार्थं धारयेद्योगी परिपूर्णं च मागधम् ।।
चतुरङ्गुलं भवेच्छस्त्रं कुब्जं वै वस्तुच्छेदनः ।
शिल्पविद्यां न शिक्षेत योगी योगपरायणः ।।
क्रयविक्रयो न कर्तव्यो योगिना योगिवाहिना ।
आरामिकैश्च कर्तव्यमेतद्धर्मं वदाम्यहम् ।।
गुप्तेन्द्रियं तथार्थज्ञं सूत्रान्ते विनये तथा ।
गृहैस्थैर्न च संसृष्टं योगिनं तं वदाम्यहम् ।।
शून्यागारे श्मशाने वा वृक्षमूले गुहासु वा ।
पलालेऽभ्यवकाशे च योगी वासं प्रकल्पयेत् ।।

*Laṅkāvatāra* 308

त्रिवस्त्रप्रावृतो नित्यं श्मशानाद्यत्र कुत्रचित् ।
वस्त्रार्थं संविधातव्यं यश्च दद्यात्सुखागतम् ॥
युगमात्रानुसारी स्यात्पिण्डभक्षपरायणः ।
कुसुमेभ्यो यथा भ्रमरास्तथा पिण्डं समाचरेत् ॥
गणे च गणसंसृष्टे भिक्षुणीषु च यद्भवेत् ।
तद्धि आजीवसंसृष्टं न तत्कल्पति योगिनाम् ॥
राजानो राजपुत्राश्च अमात्याः श्रेष्ठिनस्तथा ।
पिण्डार्थे नोपदेशेत योगी योगपरायणः ॥

*Laṅkāvatāra* 308-9

अभिज्ञप्राप्ताः प्रतिभानवन्तो गतिंगताः सर्वत शून्यतायाः ।
ऋद्धीय गच्छन्ति ते क्षेत्रकोटियो ततोत्तरे यात्तिक गङ्गवालुकाः ॥
पृच्छित्व प्रश्नं द्विपदाननुत्तमान् पुनेन्ति तस्यैव जिनस्य अन्तिके ।
सूत्रान्तनिर्हारनिरुक्तिकोविदा आलोकभूता विचरन्ति मेदिनीम् ॥
सत्त्वानमर्थाय चरन्ति चारिकां महानुभावाः सुगतस्य पुत्राः ।
न कामहेतोः प्रकरोन्ति पापं देवापि तेषां स्पृह संजनेन्ति ॥
अनर्थिका भवगतिष्वनिश्रिताः समाहिता ध्यानविहारगोचराः ।
विनिश्चितार्थाश्च विशारदाश्च निरामगन्धाः सद ब्रह्मचारिणः ॥
अच्छेद्यवाक्या प्रतिभानवन्तो निरुक्तिनिर्देशपदार्थकोविदाः ।
सर्वत्र सन्दर्शकबुद्धपुत्राः परिगृहीताः कुशलेन कर्मणा ॥
अनन्तकल्पाश्चरियाय उद्गताः स्तुताः प्रशस्ताः सद नायकेहि ।
विमोक्षतत्त्वार्थपदान देशकाः असंकिलिष्टाः सुविशुद्धशीलाः ॥
अनोपलिप्ताः पदुमेन वारिणा विमुक्तत्रैधातुकतोऽप्रमत्ताः ।
अनोपलिप्ताष्टहि लोकधर्मैर्विशुद्धकायाः परिशुद्धकर्माः ॥
अल्पेच्छसन्तुष्ट महानुभावा अगृद्ध ते बुद्धगुणाः प्रतिष्ठिताः ।
सर्वेष सत्त्वान गतिः परायणा न घोषमात्रप्रतिपत्तिसाराः ॥
यत्र स्थितास्तं च परेषु देशयु सर्वेहि बुद्धेहि परिगृहीताः ।
वैश्वासिकाः कोशधरा जिनानां ते सर्वि त्रैधातुकि त्रस्तमानसाः ॥

*Samādhirāja* 228-30

प्रशान्तचित्ताः सद रण्यगोचरा अधिष्ठिता लोकविनायकेभिः।
भाषन्ति सूत्रान्त सहस्रकोटियो यं चैव भाषन्ति त बुद्धवर्णितम् ।।
विवर्जिताः सर्वपदेभि लौकिकाः शून्याधिमुक्ताः परमार्थदेशकाः।
अनन्तवर्णा गुणसागरोपमाः बहुश्रुताः पण्डितविज्ञवन्तः ।।

*Samādhirāja* 230

धर्मं गवेषथ गौरवजाताः श्रुत्व तदापि च तत्पर भोथ।
तिष्ठथ गोचरि सर्वजिनानां यास्यथ क्षिप्र सुखावति-क्षेत्रम् ।।

ibid. 584

सर्वे जगे समचित्त भवित्वा अप्रिय मा प्रिय चित्तु करोथ।
मा च गवेषथ लाभु यशो वा क्षिप्र भविस्यथ बुद्ध मुनीन्द्राः ।।

ibid. 585

बुद्धगुणांश्च प्रभाषथ नित्यं भूतगुणेहि निरुक्तिपदेहिः।
यान् गुण श्रुत्विह सत्त्व प्रसन्नाः बुद्धगुणेषु स्पृहां जनयेयुः ।।

ibid.

नित्य सगौरवु चाचरियेषु मातु पितुस्तथ सर्वजगस्मिन्।
मा पुन मानवशानुग भोथा लप्स्यथ लक्षण त्रिंश दुवे च ।।

ibid.

संगणिकां विजहित्व अशेषां नित्यु विवेकरतापि च भोथ।
सूरत नित्युपशोभन शान्ता आत्महिताः परसत्त्वहिताश्च ।।

ibid.

मैत्रि निषेवि तथा करुणां चो मुदितुपेक्षरताः सद भोथ।
शास्तुः प्रशासनु पश्यथ नित्यं भेष्यथ क्षिप्र हितंकरु लोके ।।

ibid.

पापकमित्र म जातु भवेथ सेवथ मित्र ये भोन्ति उदाराः।
येषिह रोचति शून्यत शान्ता ये अभिप्रस्थिता उत्तमबोधिम् ।।

ibid. 586

श्रावकभूमि म शिक्षथ जातु मा च स्पृहेष्यथ तत्र चरी ये।
चित्तु म रिंचथ बुद्धगुणेषु क्षिप्र भविष्यथ बुद्धजिनेन्द्राः ।।

ibid

सत्यगिरं सद भाषथ शुद्धां मा मृष भाषथ मा परुषां च ।
नित्य प्रियं मधुरं च भणेथा लप्स्यथ वाच लोकाचरियाणाम् ।।

*Samādhirāja* 586

कायि अनर्थिक जीवित भोथा मात्म उत्कर्षक मा परपंसी ।
आत्मगुणान् समुदानयमानाः परचरियासु उपेक्षक भोथ ।।

ibid.

शून्य विमोक्षरताः सद भोथा मा प्रणिधान करोथ गतीषु ।
सर्वनिमित्त विवर्ज्य अशेषां भोथ सदा अनिमित्तविहारी ।।

ibid. 587

अन्त विवर्जयथा सद कालं शाश्वतुच्छेदस्थिता म भवाथ ।
प्रत्ययता सद बुध्यत सर्वं एव भविष्यथ यादृश शास्ता ।।

ibid.

कामरतीषु रतिं विजहित्वा दोषखिलांश्च मलान् विजहित्वा ।
मोहतमो विजहित्वन सर्वं शान्तरता नरसिंह भवाथ ।।

ibid.

नित्यमनित्य च पश्यथ नित्यं सर्व भवा सुखदुःख विमुच्य ।
अशुभमनात्मत आत्मशुभेषु भावयमानु भवेय नरेन्द्रः ।।

ibid.

लोकप्रदीपकरेभि जिनेभिर्येषिह धर्म सुनीत ।
तैरिह मारबलानि हनित्वा प्राप्तमनुत्तरबोधिरुदाराः ।।

ibid. 588

यात्तक भाषित एति गुणा मे ये च प्रकाशित दोषशता मे ।
दोष विर्वाजिय शिक्ष गुणेषु भेष्यसि बुद्ध तदेह कुमार ।।

ibid.

भोथ च सर्विषु त्यागाधिमुक्ताः शीलविशुद्धगता स्थिरचित्ताः ।
क्षान्तिरताः सद मैत्ररता करुणया चरथ शून्यक धर्मान् ।।

ibid. 583

वीर्यु जनेथ अलीन अदीनाः ध्यानरताः प्रविवेकरताश्च ।
प्रज्ञा प्रजानथ प्रज्ञविशुद्धिं भेष्यथ कारुणिका न चिरेण ।।

ibid.

रागु शमेथ सदा अशुभा ये दोषु निगृह्णथ क्षान्तिबलेन ।
मोहु निगृह्णथ प्रज्ञबलेना प्राप्स्यथ बोधि जिनानु प्रशस्ताम् ।।

*Samādhirāja* 583

कायु विभावयथा यथ फेनं दुःखमसारकु पूतिदुर्गन्धम् ।
स्कन्ध प्रजानथ रिक्तक सर्वाँल्लप्स्यथ ज्ञानमनुत्तरु क्षिप्रम् ।।

ibid. 584

दृष्टि म गृह्णथ पापिक जातु आत्म अयं पुरुषो अथ जीवः ।
सर्वि प्रजानथ शून्यक धर्मान् क्षिप्र स्पृशिस्यथ उत्तमबोधिम् ।।

ibid.

लाभ म कुर्वथ गृद्धो कदाचित् मा परितप्यथ पिण्डमलब्ध्वा ।
निन्दित शंसित मा खु चलेथा मेरुसमाश्च अकंपिय भोथा ।।

ibid.

## BODDHISATTVA'S VIRTUES

## बोधिसत्त्व-शिक्षा

अनुमोदमी ये सुविशुद्धशीला ये जीवितार्थे न करोन्ति पापम् ।
अधिमुक्ति-सम्पन्न य बोधिसत्त्वा अनुमोदमी तेष य किञ्चि पुण्यम् ।
अनुमोदमी येष प्रसादु बुद्धे धर्मे प्रसादोऽस्ति तथैव संघे ।
अनुमोदमी ये सुगतस्य पूजां कुर्वन्ति बोधिं प्रतिकाङ्क्षमाणाः ।।
अनुमोदमी येष न आत्मदृष्टिर्न भावदृष्टिर्न च जीवदृष्टिः ।
अनुमोदमी येष न पापदृष्टिर्ये शून्यतां दृष्ट्व जनेन्ति तुष्टिम् ।।
अनुमोदमी ये सुगतस्य शासने लभन्ति प्रव्रज्योपसम्पदं च ।
अल्पेच्छसन्तुष्ट वने वसन्ति प्रशान्तचारित्र ये ध्यानगोचराः ।।
अनुमोदमी एकक येऽद्वितीया वने वसन्ती सद खड्गभूताः ।
आजीवशुद्धाः सद अल्पकृत्या ये ज्ञात्रहेतोर्न करोति कुहनाम् ।।
अनुमोदमी येष न संस्तवोऽस्ति न चापि ईर्षा न कुलेषु तृष्णा ।
उत्त्रस्ति त्रैधातुकि नित्यकालमनोपलिप्ता विचरन्ति लोके ।।
अनुमोदमी येष प्रपञ्चु नास्ति निर्विण्ण सर्वासु भवोपपत्तिषु ।
अविगृहीता उपशान्तचित्ता न दुर्लभस्तेष समाधिरेषः ।।

ibid. 325-7

अनुमोदमी ये गणदोष दृष्ट्वा सर्वान् विवादान् परिवर्जयित्वा ।
सेवन्त्यरण्यं वनमूलमाश्रिताः विमुक्तिसाराः सुगतस्य पुत्राः ।।
अनुमोदमी ये विहरन्त्यरण्ये नात्मानमुत्कर्षि परान्न पंसये ।
अनुमोदमी येष प्रमादु नास्ति ये अप्रमत्ता इम बुद्धशासने ।।
यावन्त धर्माः पृथु बोधिपाक्षिकाः सर्वेष मूलं ह्ययमप्रमादः ।
ये बुद्धपुत्राः सद अप्रमत्ता न दुर्लभस्तेष अयं समाधिः ।।
निधानलाभः सुगतान शासनं प्रव्रज्यलाभो द्वितीयं निधानम् ।
श्रद्धाय लाभस्तृतीयं निधानमयं समाधिश्चतुर्थं निधानम् ।।

*Samādhirāja* 327

यावन्ति धर्माः कुशलाः प्रकीर्तिताः शीलं श्रुतं त्यागु तथैव क्षान्तिः ।
सर्वेष मूलं ह्ययमप्रमादो निधानलम्भः सुगतेन देशितः ।।

ibid. 328

ते ते शीलधनेनुपेत मतिमान् शिक्षाधनाढचा नराः
ते ते शीलव्रते स्थिता अभिरता धर्मद्रुमस्याङ्कुराः ।
ते ते रक्तकषाय-चीवरधरा नैष्क्रम्यतुष्टाः सदा
ते ते सत्त्वहिताय अप्रतिसमाः सर्वज्ञतां प्रस्थिताः ।।

ibid. 556

ते ते दानपती भवन्ति सततं सद मुक्तत्यागी विदु
ते ते मत्सरियैर्न संवसि महात्यागे रमन्ते सदा ।
ते ते सत्त्व दरिद्र दृष्ट्व दुखितान् भोगेहि सन्तर्पयी
ते ते सत्त्वहिते सुखाय सततं सर्वज्ञतां प्रस्थिताः ।।

ibid. 557

ते ते आहनि धर्मभेरि विपुलां ज्ञाने सदा शिक्षिताः
छिन्दन्ती जन सर्वसंशयलतां ज्ञाने सदा प्रस्थिताः ।
ते ते सुश्रुत धर्मधारि विरजा सूत्रान्तकोटीशतान्
पर्षायां स्थित आसने मतिधराः प्रव्याहरी पण्डिताः ।।

ibid.

ते ते भोन्ति बहुश्रुताः श्रुतिधराः सम्बुद्धधर्मन्धराः
कोशान् धर्ममयान् धरन्ति मुनिनां धर्मन्निधाने रताः ।

ते ते भोन्ति विशालप्रज्ञ विपुलां प्रीतिं जनेन्ति सदा
देशेन्ता वरधर्म शान्त निपुणं नैर्याणिकं दुर्दृशम् ।।

*Samādhirāja* 557

ते ते मत्त प्रमत्त सत्त्व सततं दृष्ट्वा प्रमादे स्थितान्
दृष्ट्वा चैव प्रनष्ट-उत्पथगतान् संसारमार्गे स्थितान् ।
तेषू मैत्र जनित्वुदार करुणा मुदिताप्युपेक्षा स्थिता
तेषां मार्गवरं प्रदर्शयि शिवमष्टाङ्गिकं दुर्दृशम् ।।

ibid. 558

ते तु नाव करित्व धर्म सुदृढा धारेन्ति सत्त्वान् बहून्
उह्यन्तान् महार्णवेषु पतितान् संसारस्रोतो गतान् ।
बोध्यङ्गा-बल-इन्द्रियैः कवचिताः सद्धर्मनावारुहाः
तीरे पारमि क्षेम नित्यमभये स्थापेन्ति सत्त्वान् सदा ।।

ibid.

ते ते वैद्यवरा व्रतेषु चरिता वैद्योत्तमा वेदका
विद्याज्ञानविमुक्तिपारगमिता सद्धर्म-भैषज्यदाः ।
दृष्ट्वा सत्त्व गिलाननेकविविधै रोगैः समभ्याहतान्
तैषां धर्मविरेचनं ददति तद्धर्मैश्चिकित्सन्ति तान् ।

ibid.

कायस्य शुद्धी तथ वाचशुद्धी चित्तस्य शुद्धिस्तथ दृष्टिशुद्धिः ।
आरम्बणानां समतिक्रमो यः कश्चिज्जिनो भाषति तं समाधिम् ।।
अविप्रणाशः फलधर्मदर्शनम् अष्टाङ्गिका मार्गवरस्य भावना ।
तथागतैः संगमु तीक्ष्णप्रज्ञता सत्यप्रवेशः सद धर्मज्ञानम् ।।
स्कन्धपरिज्ञा समता च धातुनामपकर्षणञ्चायतनान सर्वशः ।
अनुत्पाद साक्षात्क्रिययावतारः कश्चिज्जिनो भाषति तं समाधिम् ।।
प्रतिसंविदा शान्त्यवतारज्ञानं सर्वाक्षराणां च प्रभेदज्ञानम् ।
वस्तुनिवेशसमतिक्रमो यः कश्चिज्जिनो भाषति तं समाधिम् ।।
घोषः परिज्ञाथ प्रामोद्यलाभः प्रीतिश्च भोती सुगतान वर्णम् ।
आर्या गतिर्मार्दवता च उज्जुका कश्चिज्जिनो भाषति तं समाधिम् ।।

ibid. 235-6

न जातु कुर्याद्भृकुटिं ससूरतः साखिल्यमाधुर्यस्मितं मुखञ्च ।
दृष्ट्वा च सत्त्वान् प्रथमालपेति कश्चिज्जिनो भाषति तं समाधिम् ।।
अनालस्यता गौरवता गुरूणां शुश्रुषणा वन्दन प्रेमदर्शना ।
उपपत्तिसन्तुष्टित शुक्लता च कश्चिज्जिनो भाषति तं समाधिम् ।।
आजीव शुद्धिस्तथ रण्यवासो धूते स्थितानुस्मृतेरप्रमोषः ।
स्कन्धेषु कौशल्यमथापि धातुषु कश्चिज्जिनो भाषति तं समाधिम् ।।
आयतनकौशल्यमभिज्ञ-ज्ञानं किलेश-अपकर्षण दान्तभूमिं ।
पृथु सर्वमन्त्राणमसावुच्छेदः कश्चिज्जिनो भाषति तं समाधिम् ।।
समतिक्रमः सर्वभवग्गतीनां जातिस्मृतिधर्मनिस्काङ्क्षता च ।
धर्मे च चित्तं श्रुत एषणा च कश्चिज्जिनो भाषति तं समाधिम् ।।
विशेषगामी सद भावनारति आपत्ति कौशल्यत निःसृतौ स्थितः ।
यत्र स्थितोऽनुशयितां जहाति कश्चिज्जिनो भाषति तं समाधिम् ।।
तीक्ष्णस्य ज्ञानस्य वरागमो यतो अचालियो शैलसमो अकम्पितः ।
अविर्वातितालक्षण धारणीमुखं कश्चिज्जिनो भाषति तं समाधिम् ।।

*Samādhirāja* 236-7

## TEN SPIRITUAL STAGES

### दश भूमयः

अध्याशयेन विमलेन अनाविलेन
पश्यन्ति ये जिन न जातु भवन्ति तृप्ताः ।
सर्वं जिनान अपरान्तवियूहमेघान्
प्रणिध्येन्ति ते प्रथमजन्मस्थिताः सुमेधाः ।।

सर्वत्रियध्वगमशेष स्फुरित्व लोकं
क्षेत्राणि सर्व तथ धर्म तथैव बुद्धान् ।
सत्त्वप्रमोक्षप्रणिधानवियूहचित्तं
जन्मं द्वितीयमिदमुक्तमचिन्तियानाम् ।।

ये धर्ममेघ पिबमान न जातु तृप्ताः
निध्यप्रिमानस त्रियध्वअसङ्गकायाः ।

*Gaṇḍavyūha* 371

आकाशधातु विमला समचित्तकायाः
जन्मं तृतीयमिदमप्रतिमं हि तेषाम् ।।

ये ते महाकरुणसागरमोतरन्ति
अध्याशयैर्वजिरसारसुमेरुकल्पैः ।
सर्वज्ञतानयसमुद्र विगाहमानाः
तेषां चतुर्थमिह जन्म नरर्षभाणाम् ।।

ये मैत्रया दशसु दिक्षु जगत्स्फरित्वा
अभिनिर्हरन्त्यमलपारमितासमुद्रान् ।
परिपाचयन्ति जगु धर्मप्रभामिरन्त
इमु जन्मु पञ्चमु महापुरुषाण तेषाम् ।।

धर्मस्वभावप्रतिविद्ध असङ्गचित्तास्-
त्रैयध्विकाप्रतिम बुद्धकुलाभिजाता ।
ये धर्मधातुनयसागरमोतरन्ति
षष्ठं इदं विपुल जन्म विदून तेषाम् ।।

ये धर्मकाय परिशुद्ध असङ्गचित्ताः
क्षेत्राण्यशेषतु स्फरित्व स्वकैः शरीरैः ।
निःशेषबुद्धबलतानुगमप्रविष्टा
जन्माथ सप्तममचिन्त्यमिदं बुधानाम् ।।

ये ज्ञानसागरनये वशितानुयाताः
सर्वज्ञतानयमुखं व्यवचारयन्ति ।
सर्वसमाधिनयसागर ओतरन्ति
जन्माष्टमं मतमिदं तथताश्रयाणाम् ।।

ये धर्मक्षेत्रप्रसरान् परिशोधयन्ति
ये सर्वसत्त्वपरिपाकनयप्रयुक्ताः ।
बौद्धा विकुर्वितवियूह विदर्शयन्ति
तेषामिदं नवमु जन्म महायशानाम् ।।

*Gaṇḍavyūha* 371-3

ये ते यश बल जिनान तथा प्रविष्टाः
सवज्ञता विपुलवेग विवर्धमानाः ।
ये धर्मधातुतलभेदनयेष्वसङ्गास्
तेषामिदं दशमु जन्मु जिनौरसानाम् ।।

*Gaṇḍavyūha* 373

## BODHISATTVA'S PURSUITS

## बोधिसत्त्व-विहारः

सर्वेष चो जिनसुतान महायशानां
महाज्ञानगोचर विमोक्षप्रतिष्ठितानाम् ।
ये धर्मधातु विचरन्ति असज्जमाना
आवासु तेषमयमप्रतिपुद्गलानाम् ।।

दमदानशीलक्षमवीर्यबलोद्गतानां
ध्यानैरभिज्ञबलपारगतिंगतानाम् ।
प्रज्ञाउपायप्रणिधानबलस्थितानां
महायानपारमिगतानमयं विहारः ।।

एषो असङ्गमतिना विपुलाशयानां
आकाशगोचररतानमनिश्रितानाम् ।
सर्वत्रियध्वस्फरणानमनावृतानां
आवासु सर्वभवभावविभावितानाम् ।।

ये सर्वधर्म अनुत्पादनयप्रविष्टा
विमृशन्ति धर्मप्रकृतिं गगनस्वभावा ।
न करोन्ति निश्रयु क्वचिद्गगने व पक्षी
तेषां विहारु अयु ज्ञानविशारदानाम् ।।

ये रागदोषमथ मोहस्वभाव ज्ञात्वा
संकल्पहेतु जनित वितथ प्रवृत्तम् ।

ibid. 473

निर्विकल्पयन्ति च विरागमयाह तेषां
शान्तप्रशान्त्युपगतानमयं विहारः ।।

ये ते विमोक्षमुख सत्यनयार्यमार्ग
स्कन्धांस्तथायतनसत्त्वप्रतीत्यतां च ।
प्रपरीक्षमाण न पतन्ति विदू प्रशान्ति
प्रज्ञाउपायकुशलानमयं विहारः ।।

ये ते असङ्गचरिता इम धर्मधातु
विचरन्ति भारविगता खगवायुभूताः ।
सर्वे निकेत विगता अनिकेतचारी
तेषामनिश्रितमतीतमयं विहारः ।।

क्लेशातुरं जनमिमु व्यवलोकयित्वा
समुदानयन्त्यमृतज्ञानमहोषधानि ।
परिमोचयन्ति विपुला करुणां जनित्वा
महवैद्यराजसदृशानमयं विहारः ।।

ये धर्ममेघ सुगतान दशद्दिशासु
एकासने स्थित पिबन्ति असंप्रमूढाः ।
अपरान्तकल्पनियुतान्यवितृप्तिचित्ता
सहबुद्धिसागरसमानमयं विहारः ।।

प्रणिधानधारणिसमाधिमुखप्रवेशान्
ध्यानविमोक्षप्रणिधानमुखानि चैव ।
अभिनिर्हरन्ति विचरन्ति अनन्तकल्पान्
इम ते प्रविष्ट सुगतानुसुताः स्मृतीमाः ।।

इह ते स्थिता जिनसुता विविधा विचित्रा
अभिनिर्हरन्ति बहुशास्त्रकथार्थयुक्ताः ।
सौख्यावहानि जगतामिह शिल्पस्थाना-
न्युनुचिन्तयन्त विहरन्ति सतां विहारः ।।

*Gaṇḍavyūha* 473-6

## BODHISATTVA'S GRADUAL COURSE OF TRAINING

## बोधिसत्त्वसाधनाक्रमः

बोधिचित्तानुशंसः

भवदुःखशतानि तर्तुकामैरपि सत्त्वव्यसनानि हर्तुकामैः ।
बहुसौख्यशतानि भोक्तुकामैर्न विमोच्यं हि सदैव बोधिचित्तम् ।।

*Bodhicaryāvatāra* 14

तद्बोधिचित्तं द्विविधं विज्ञातव्यं समासतः ।
बोधिप्रणिधिचित्तं च बोधिप्रस्थानमेव च ।।

ibid. 23

पापदेशना

अनादिमति संसारे जन्मन्यत्रैव वा पुनः ।
यन्मया पशुना पापं कृतं कारितमेव वा ।।

ibid.

यच्चानुमोदितं किंचिदात्मघाताय मोहतः ।
तदत्ययं देशयामि पश्चात्तापेन तापितः ।।

ibid 59

बोधिचित्तपरिग्रहः

आत्मभावांस्तथा भोगान् सर्वत्र्यध्वगतं शुभम् ।
निरपेक्षस्त्यजाम्येष सर्वसत्त्वार्थसिद्धये ।।

ibid. 80

सर्वत्यागश्च निर्वाणं निर्वाणार्थि च मे मनः ।
त्यक्तव्यं चेन्मया सर्वं वरं सत्त्वेषु दीयताम् ।।

ibid. 81

संप्रजन्यरक्षणम्

जपास्तपांसि सर्वाणि दीर्घकालकृतान्यपि ।
अन्यचित्तेन मन्देन वृथैवेत्याह सर्ववित् ।।

ibid. 103

दुःखं हन्तुं सुखं प्राप्तुं ते भ्रमन्ति मुधाम्बरे ।
यैरेतद्धर्मसर्वस्वं चित्तं गुह्यं न भावितम् ।।

ibid. 104

तस्मात्स्वधिष्ठितं चित्तं मया कार्यं सुरक्षितम्।
चित्तरक्षाव्रतं मुक्त्वा बहुभिः किं मम व्रतैः।।

*Bodhicaryāvatāra* 105

यदा चलितुकामः स्याद्वक्तुकामोऽपि वा भवेत्।
स्वचित्तं प्रत्यवेक्ष्यादौ कुर्याद्धैर्येण युक्तिमत्।।

ibid.

अनुनीतं प्रतिहतं यदा पश्येत्स्वकं मनः।
न कर्तव्यं न वक्तव्यं स्थातव्यं काष्ठवत्तदा।।

ibid. 120

क्षान्तिपारमिता

न च द्वेषसमं पापं न च क्षान्तिसमं तपः।
तस्मात् क्षान्तिं प्रयत्नेन भावयेद्विविधैर्नयैः।।

ibid.

मनः शमं न गृह्णाति न प्रीतिसुखमश्नुते।
न निद्रां न धृतिं याति द्वेषशल्ये हृदि स्थिते।।

ibid. 169

दह्यमाने गृहे यद्वदग्निर्गत्वा गृहान्तरम्।
तृणादौ यत्र सज्येत तदाकृष्यापनीयते।।

ibid.

एवं चित्तं यदासङ्गाद्दह्यते द्वेषवह्निना।
तत्क्षणं तत्परित्याज्यं पुण्यात्मोद्दाहशङ्कया।।

ibid. 208

वीर्यपारमिता

विपुलसुगन्धिशीतलसरोरुहगर्भगता
मधुरजिनस्वराशनकृतोपचितद्युतयः।
मुनिकरबोधिताम्बुजविनिर्गतसद्वपुषः
सुगतसुता भवन्ति सुगतस्य पुरः कुशलैः।।

ibid. 266

मया हि सर्वं जेतव्यमहं जेयो न केनचित्।
मयैष मानो वोढ़व्यो जिनसिंहसुतो ह्यहम्।।

ibid. 273

संक्लेशपक्षमध्यस्थो भवेद्दृप्तः सहस्रशः।
दुर्योधनः क्लेशगणैः सिंहो मृगगणैरिव ।।

*Bodhicaryāvatāra* 275

ध्यानपारमिता

एवमुद्विज्य कामेभ्यो विवेके जनयेद्रतिम्।
कलहायासशून्यासु शान्तासु वनभूमिषु ।।
धन्यैः शशाङ्ककरचन्दनशीतलेषु
रम्येषु हर्म्यविपुलेषु शिलातलेषु।
निःशब्दसौम्यवनमारुतवीज्यमानैः
चङ्क्रम्यते परहिताय विचिन्त्यते च ।।

ibid. 325

विहृत्य यत्र क्वचिदिष्टकालं
शून्यालये वृक्षतले गुहासु।
परिग्रहारक्षणखेदमुक्तः
चरत्यपेक्षाविरतो यथेष्टम् ।।
स्वच्छन्दचार्यनिलयः प्रतिबद्धो न कस्यचित्।
यत्संतोषसुखं भुङ्क्ते तदिन्द्रस्यापि दुर्लभम् ।।
एवमादिभिराकारैर्विवेकगुणभावनात्।
उपशान्तवितर्कः सन् बोधिचित्तं तु भावयेत् ।।

ibid. 326

प्रज्ञापारमिता

लोकेन भावा दृश्यन्ते कल्प्यन्ते चापि तत्त्वतः।
न तु मायावदित्यत्र विवादो योगिलोकयोः ।।

ibid. 373

यदा न भावो नाभावो मतेः संतिष्ठते पुरः।
तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ।।

ibid. 417

चिन्तामणिः कल्पतरुर्यथेच्छापरिपूरणः।
विनेयप्रणिधानाभ्यां जिनबिम्बं तथेक्ष्यते ।।

ibid. 418

यथा गारुड़िकः स्तम्भं साधयित्वा विनश्यति ।
स तस्मिंश्चिरनष्टेऽपि विषादीनुपशामयेत् ।।

*Bodhicaryāvatāra* 420

बोधिचर्यानुरूप्येण जिनस्तम्भोऽपि साधितः ।
करोति सर्वकार्याणि बोधिसत्त्वेऽपि निर्वृते ।।

ibid. 421

विद्यमानस्य भावस्य हेतुना किं प्रयोजनम् ।
अथाप्यविद्यमानोऽसौ हेतुना किं प्रयोजनम् ।।

ibid. 584

नाभावस्य विकारोऽस्ति हेतुकोटिशतैरपि ।
तदवस्थः कथं भावः को वान्यो भावतां गतः ।।

ibid. 585

नाभावकाले भावश्चेत्कदा भावो भविष्यति ।
नाजातेन हि भावेन सोऽभावोऽपगमिष्यति ।।

ibid. 586

न चानपगतेऽभावे भावावसरसंभवः ।
भावाश्चाभावतां नैति द्विस्वभावप्रसङ्गतः ।।

ibid. 587

एवं च न विरोधोऽस्ति न च भावोऽस्ति सर्वदा ।
अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत् ।।

ibid. 588

## REAL NATURE OF ALL OBJECTS

**सर्वधर्मस्वभावः**

अयं च कायो यथ शून्यग्रामः षड् ग्रामचौरोपम इन्द्रियाणि ।
तान्येकग्रामे निवसन्ति सर्वे न ते विजानन्ति परस्परेण ।।
चक्षुरिन्द्रियं रूपमेतेषु धावति श्रोत्रेन्द्रियं शब्दविचारणेन ।
घ्राणेन्द्रियं गन्धविचित्रहारि जिह्वेन्द्रियं नित्य रसेषु धावति ।।
कायेन्द्रियं स्पर्शगतोऽभिधावति मनेन्द्रियं धर्मविचारणेन ।
षडिन्द्रियाणीति परस्परेण स्वकं स्वकं विषयमभिधावति ।।
चित्तं हि मायोपम चञ्चलं च षडिन्द्रियं विषयविचारणं च ।
यथा नरो धावति शून्यग्रामे षड्ग्रामचौरेभि समाश्रितश्च ।।
कायश्च निश्चेष्ट निर्व्यापारं च असारकः प्रत्ययसंभवश्च ।
अभूत विकल्पसमुत्थितश्च स्थितकर्मयन्त्रमिव शून्यग्रामः ।।
क्षित्यम्भतेजोऽनिलानि यथा चौरग्रामान्तःस्थित देशदेशे ।
परस्परेणैव सदा विरुद्धा यथैव आशीविष एकवेश्मनि ।।
धातूरगास्ते च चतुर्विधानि द्वे ऊर्द्धगामी द्वय हेष्टगामी ।
द्वयाद्वयं दिशि विदिशासु सर्वे नश्यन्ति ता धातुभुजंगमानि ।।
चित्तं च विज्ञानमध्यस्थितं च गत्वा यथा पूर्वकृतेन कर्मणा ।
देवे मनुष्येषु च त्रिष्वपाया यथा कृतं पूर्वभवे प्रवर्त्त्या ।।

*Suvarṇaprabhāsa* 49-52

अलब्धि-लब्धिर्नो मन्ये लब्धे लब्धिर्न विद्यते ।
मायोपमं च तज्ज्ञानं न मायायां च तत् स्थितम् ।।

*Samādhirāja* 412

एवं शून्येषु धर्मेषु बालबुद्धिं विकल्पयेत् ।
विकल्पे चरमाणानां गतयः षट् परायणाः ।।
जातिजरोपगाः सत्त्वा जातिस्तेषां न क्षीयते ।
जातिमरणस्कन्धानां दुःखं तेषामनन्तकम् ।।
अयुक्ताः संप्रयुक्ताश्च कर्मयोगस्मि ते स्थिताः ।
कर्मणस्ते न मुच्यन्ते कर्मोपादानि ये रताः ।।

कर्मौघे वाहतान्तेषां कर्म न क्षीयते सदा।
पुनः पुनश्च श्रीयन्ते मारपक्षे स्थिताः सदा॥
पुत्रा मह्यं धनं मह्यं बालबुद्धीहि कल्पितम्।
असतं कर्म कल्पित्वा संसारो भूयु वर्धते॥
संसारं वर्धयन्तस्ते संसरन्ति पृथग्जनाः।
पृथक् पृथक् च गच्छन्ति तेन चोक्ताः पृथग्जनाः॥
पृथुधर्मा प्रवक्ष्यन्ति उज्झित्वा बुद्धशासनम्।
न ते मोक्षं लभिष्यन्ति मारस्य वशमागताः॥

*Samādhirāja* 412-13

प्रतीत्य धर्मा वर्तन्ते उत्पद्यन्ते प्रतीच्य च।
प्रतीत्यतां यद्धर्माणां सर्वे जानन्ति ते विदुः॥
विधिज्ञाः सर्वधर्मेषु शून्यताया गतिंगताः।
गतिं च ते प्रजानन्ति सर्वधर्मगतिंगताः॥

ibid. 444

न च अस्मि लोकि मृतु कश्चि नरो परलोकि संक्रमति गच्छति वा।
न च कर्म नश्यति कदाचि कृतं फलमेति कृष्णशुभ संसरतो॥
न च शाश्वतं न च उच्छेद पुनो न च कर्मसंचयु न चापि स्थितिः।
न च सोऽपि कृत्व पुनरास्पृशती न च अन्यु कृत्व पुन वेदयते॥
न च संक्रमो न च पुनागमनं न च सर्वमस्ति न च नास्ति पुनः।
न च दृष्टिस्थानुगति-शुद्धिरिहो न च सत्त्वचरु च प्रशान्तगतो॥
न सत्त्व लभ्यति न जीवु नरो इमि धर्म फेनकदलीसदृशाः।
मायोपमा गगनविद्यु समोदचन्द्रसन्निभ मरीचिसमाः॥
अनुपादु शान्तु अनिमित्तपदं सुगतान गोचरु जिनान गुणाः।
बल-धारणी दशबलान बलं बुद्धानियं वृषभिता परमा॥

ibid. 361-2

शकुनानां यथाकाशे पदं तेषां न लभ्यते।
एवंस्वभावा सा बोधिर्बोधिसत्त्वैश्च बुध्यते॥

यथा मायां विदर्शेति मायाकारः सुशिक्षितः ।
नानाप्रकाररूपाणि न च रूपोपलभ्यते ।।

*Samādhirāja* 412

शैल-गुहा-गिरि-दुर्ग-नदीषु यद्व प्रतिश्रुत्क जायि प्रतीत्य ।
एविमु संस्कृतु सर्वि विजाने मायमरीचिसमं जगु सर्वम् ।।
संवृति भाषितु धर्मु जिनेनासंस्कृत संस्कृत पश्यथ एवम् ।
नास्तिह भूततु आत्म नरो वा एतकु लक्षण सर्व जगस्य ।।
कृष्णाशुभ च न नश्यति कर्म आत्मन कृत्व च वेदयितव्यम् ।
नो पुन संक्रम कर्मफलस्य नो च अहेतुक प्रत्यनुभोन्ति ।।
सर्वि भवा अलिकावशिकाश्चो रिक्तकु तुच्छ फेनसमाश्च ।
माय-मरीचिसमाः सद शून्या देशितु शब्दितु ते च विविक्ताः ।।
तत्र च प्राणिसहस्र अशीतिः श्रुत्विमु धर्मस्वभाव प्रणीतम् ।
भूतु अयं परमार्थ निर्देशो ते अनुत्पत्तिकक्षान्ति लभिसु ।।
नास्ति उपादु निरोधु नरस्यो एविमि धर्म सदा विविक्ताः ।
एव प्रजानतु नो परिहाणि राज लभी अनुत्पत्तिकक्षान्तिम् ।।

ibid. 570-3

चित्तेन नीयते लोकः चित्तं चित्तं न पश्यति ।
चित्तेन चीयते कर्म शुभं वा यदि वाशुभम् ।।

*Śikṣāsamuccaya* 121

सुनिश्चलं सुप्रसन्नं धीरं सादरगौरवम् ।
सलज्जं सभयं शान्तं पराराधनतत्परम् ।।
आत्मसत्त्ववशं नित्यमनवद्येषु वस्तुषु ।
निर्माणमिव निर्मानं धारयाम्येष मानसम् ।।

ibid. 127

शून्या अनामका धर्माः नाम किं परिपृच्छसि ।
शून्यता न क्वचिद्देवा न नागा नापि राक्षसाः ।।
मनुष्या वाऽमनुष्या वा सर्वे तु एष विद्यते ।
नाम्ना हि नामता शून्या नाम्नि नाम न विद्यते ।।

अनामकाः सर्वे धर्माः नाम्ना तु परिदीपिताः।
यो हि स्वभावो नाम्नो वै न स दृष्टो न च श्रुतः।
न चोत्पन्नो निरुद्धो वा कस्य नामेह पृच्छसि।।
व्यवहारकृतं नाम प्रज्ञप्तिर्नामिदर्शिता।
रत्नचित्रो ह्ययं नाम्ना रत्नोत्तमपर इति।।

*Śikṣāsamuccaya* 241

यदपि न निरीहकत्वं क्रियां च न जानसे मया प्रोक्तम्।
शकटाङ्ग-संनिपातं निरीक्षव शकटस्य चैव क्रियाम्।।
कर्म च मे आख्यातं कर्ता न विद्यते दशसु दिक्षु।
वातेरितादिव तरोर्यथा हि निवर्तते वह्निः।।
न च मारुतो न च तरुश्चेतयति हुताशनं च यजने।
न निवर्तते वह्निस्तथैव कर्मस्य कर्तारः।

ibid. 262

## TATHĀGATA-SPHERE

### तथागतविषयः

न लुब्धैर्न सत्त्वैर्न च दुष्टचित्तैः शक्यं न मोहान्धतमोवृतैश्च।
न म्रक्षमानोपहताशयैश्च विजानितुं शान्त जिनान धर्मता।।
नैर्ष्याणमात्सर्यवशानुगामिभिः न शाठ्यमायाकलुषाशयेभिः।
न क्लेशकर्मावरणावृतैश्च शक्यो ह्ययं जानितु बुद्धगोचरः।।
न स्कन्धधात्वायतनप्रतिष्ठितैः न चापि सत्कायसमाश्रितेभिः।
न दृष्टिसंज्ञाविपरीतचित्तैः शक्या इयं जानितु बुद्धभूमिः।।
दुर्ज्ञेय शान्तो विषयो जिनानां स्वभावतो निर्मलनिर्विकल्पः।
संसारसक्तैर्न भवाश्रितैश्च शक्यं समाज्ञातुमयं हि धर्मः।।
ये बुद्धगोत्रैर्हि कुलेभि जाता स्वधिष्ठिताः सर्वतथागतैश्च।
ये धर्मराज्ञां कुलवंशधारिणस्तेषामृषीणां खलु गोचरोऽयम्।।

*Gaṇḍavyūha* 322

सदुर्लभो बुद्धशब्दः कल्पकोटीशतैरपि ।
किं पुनर्दर्शनं सर्वकाङ्क्षाछेदमनुत्तमम् ।।
सुदृष्टो लोकप्रद्योतः सर्वधर्मगतिंगतः ।
पुण्यतीर्थं त्रिलोकस्य सर्वसत्त्वविशोधनम् ।।
महत्पुण्यमयं क्षेत्रमुदितं ज्ञानमण्डलम् ।
भासयत्यमितं लोकं पुण्यस्कन्धं विवर्धनम् ।।
छेदनो दुःखजालस्य ज्ञानस्कन्धविशोधनः ।
न दुर्गतिभयं तेषा यैरिहारागितो जिनः ।।
विपुलं जायते चित्तं पश्यतां द्विपदोत्तमम् ।
प्रज्ञाबलमसंख्येयं जायते चन्द्रभास्वरम् ।।

*Gaṇḍavyūha* 31

अर्थाय सर्वसत्त्वानामुत्पद्यन्ते तथागताः ।
महाकारुणिका धीरा धर्मचक्रप्रवर्तकाः ।।
प्रतिकर्तुं कथं शक्यं बुद्धानां सर्वदेहिभिः ।
सत्त्वार्थेष्वभियुक्तानां कल्पकोटीशतैरपि ।।
कल्पकोट्यो वरं पक्वस्त्यपाये भृशदारुणे ।
न त्वेवादर्शनं शास्तुः सर्वसङ्गविवर्तिनः ।।
यावन्त्यः सर्वलोकेऽस्मिन्नपायगतयः पृथक् ।
वरं तत्र चिरं वासो बुद्धानामाश्रुतिर्न च ।।
किं कारणमपायेषु निवासश्चिरमिष्यते ।
यत्कारणं जिनेन्द्रस्य दर्शनं ज्ञानवर्धनम् ।।
छिद्यन्ते सर्वदुःखानि दृष्ट्वा लोकेश्वरं जिनम् ।
संभवत्यवतारश्च ज्ञाने संबुद्धगोचरे ।।
क्षपयत्यावृती सर्वा दृष्ट्वा बुद्धं नरोत्तमम् ।
वर्धयत्यमितं पुण्यं येन बोधिरवाप्यते ।।

ibid. 32

## THREE BODIES OF THE TATHĀGATA

### त्रिकायम्

त्रिभिः कायैस्तु विज्ञेयो बुद्धानां कायसंग्रहः ।
साश्रयः स्वपरार्थो यस्त्रिभिः कायैर्निर्दशितः ।।

*Commentary*

त्रिभिश्च कायैर्बुद्धानां सर्वकायसंग्रहो वेदितव्यः । एभिस्त्रिभिः कायैः साश्रयः स्वपरार्थो निर्दशितः । द्वयोः स्वपरार्थप्रभावितत्वात् द्वयोश्च तदाश्रितत्वाद्यथा पूर्वमुक्तम् ।

आश्रयेणाशयेनापि कर्मणा ते समा मताः ।
प्रकृत्याऽस्रंसनेनापि प्रबन्धेनैषु नित्यता ।।

*Commentary*

ते च त्रयः कायाः सर्वबुद्धानां यथाक्रमं त्रिभिर्निर्विशेषा आश्रयेण धर्मधातोरभिन्नत्वात् आशयेन पृथक् बुद्धाशयस्याभावात् । कर्मणा च साधारणकर्मकत्वात् । तेषु च त्रिषु कायेषु यथाक्रमं त्रिविधा नित्यता वेदितव्या येन नित्यकायास्तथागता उच्यन्ते । प्रकृत्या नित्यता स्वाभाविकस्य स्वभावेन नित्यत्वात् । अस्रंसनेन सांभोगिकस्य धर्मसंभोगाविच्छेदात् । प्रबन्धेन नैर्माणिकस्यान्तर्व्यये पुनः पुनर्निर्माण-दर्शनात् ।

*Sūtrālaṅkāra* 64

रूपेण दर्शिता बोधी बोधये रूप दर्शितम् ।
विसभागेन शब्देन उत्तरो धर्म देशितः ।।
शब्देन उत्तरं रूपं गम्भीरं च स्वभावतः ।
समं रूपं च बोधिश्च नानात्वं नास्य लभ्यते ।।
यथा निर्वाण गम्भीरं शब्देनासंप्रकाशितम् ।
लभ्यते न च निर्वाणं स च शब्दो न लभ्यते ।।
शब्दश्चाप्यथ निर्वाणमुभयं तन्न लभ्यते ।
एवं शून्येषु धर्मेषु निर्वाणं संप्रकाशितम् ।।

*Samādhirāja* 214-15

निर्वाणं निर्वृती वुत्ता निर्वाणं च न लभ्यते ।
अप्रवृत्त्यैव धर्माणां यथा पश्चात्तथा पुरा ।।
सर्वधर्माः स्वभावेन निर्वाणसमसादृशाः ।
ज्ञाता नैष्क्रम्यमानेहि ये युक्ता बुद्धशासने ।।
पश्यित्वा कायु बुद्धस्य वक्ष्यन्ते दृष्टु नायक ।
न चाहं रूपकायेन पश्यितुं शक्य केनचित् ।।
ज्ञातः स्वभावो रूपस्य यादृशं रूपलक्षणम् ।
रूपस्वभावमाज्ञाय कायो मम निदेशितः ।।
एवं पञ्चान स्कन्धानां ज्ञानं मे धर्मलक्षणम् ।
ज्ञात्वा स्वभावं धर्माणां धर्मकाये प्रतिष्ठितः ।।
देशेमि धर्म सत्त्वानां धर्मकायेऽप्यनिःसृतः ।
न च धर्मत बुद्धानां शक्यं वाचाय भाषितुम् ।।

*Samādhirāja* 315

प्रतिभासोपमा धर्मा यैर्हि ज्ञात्वा स्वभावतः ।
नैव ते रूपकायेन पश्यन्ते बुद्धविग्रहम् ।।
अविग्रहो ह्ययं धर्मो विग्रहो नात्र कश्चन ।
अविग्रहश्च यो धर्म एष बुद्धस्य विग्रहः ।।
धर्मकायेन पश्यन्ति ये ते पश्यन्ति नायकम् ।
धर्मकाया हि संबुद्धा एतत् संबुद्धदर्शनम् ।।

ibid. 409

वज्रसंहतनकायो निर्मितकायदर्शकः ।
नापि सर्षपमात्रं च धातुर्नाम महर्षिणाम् ।।
अनस्थिरुधिरे काये कुतो धातुर्भविष्यति ।
उपायधातुनिक्षेपः सत्त्वानां हितकारणम् ।।

*Suvarṇaprabhāsa* 15

यदा स्रोतःसु गङ्गाया रोहेयुः कुमुदानि च ।
रक्ताः काका भविष्यन्ति शङ्खवर्णाश्च कोकिलाः ।।
जम्बुस्तालफलं दद्यात्खर्जुरश्चाम्रमञ्जरीम् ।
तदा सर्षपमात्रं च व्यक्तं धातुर्भविष्यति ।।

ibid. 12-13

धर्मकायो हि संबुद्धो धर्मधातुस्तथागतः।
ईदृशो भगवत्काय ईदृशी धर्मदेशना ।।
न बुद्धः परिनिर्वाति न धर्मः परिहीयते।
सत्त्वानां परिपाकाय परिनिर्वाणं निदर्शयेत् ।।
अचिन्त्यो भगवान्बुद्धो नित्यकायस्तथागतः।
देशेति विविधान् व्यूहान्सत्त्वानां हितकारणात् ।।

*Suvarṇaprabhāsa* 15

## MĀDHYAMIKA PHILOSOPHY

## माध्यमिकदर्शनम्

प्रत्ययपरीक्षा

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ।।

*Mādhyamikakārikā* 12

संस्कृतपरीक्षा

प्रतीत्य यद्यद्भवति तत्तच्छान्तं स्वभावतः।
तस्मादुत्पद्यमानं चं शान्तमुत्पत्तिरेव च ।।

ibid. 159-60

अग्नीन्धनपरीक्षा

इन्धनं पुनरग्निर्न नाग्निरन्यत्र चेन्धनात्।
नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः ।।

ibid. 211

पूर्वापरकोटिपरीक्षा

पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः।
संसारोऽनवराग्रो हि नास्यादिर्नापि पश्चिमम् ।।
पश्चाज्जातिर्यदि भवेज्जरामरणमादितः।
अहेतुकमजातस्य स्याज्जरामरणं कथम् ।।

ibid. 219, 222

दुःखपरीक्षा

न तावत्स्वकृतं दुःखं न हि तेनैव तत्कृतम् ।
परो नात्मकृतश्चेत्स्याद्दुःखं परकृतं कथम् ।।

*Mādhyamikakārikā* 232

बन्धनमोक्षपरीक्षा

पुद्गलः संसरति चेत्स्कन्धायतनधातुषु ।
पञ्चधा मृग्यमाणोऽसौ नास्ति कः संसरिष्यति ।।

ibid. 284

कर्मफलपरीक्षा

योऽङ्कुरप्रभृतिबीजात्संतानोऽभिप्रवर्तते ।
ततः फलमृते बीजात्स च नाभिप्रवर्तते ।।
शून्यता च न चोच्छेदः संसारश्च न शाश्वतं ।
कर्मणोऽविप्रणाशश्च धर्मो बुद्धेन देशितः ।।

ibid. 312, 322

आत्मपरीक्षा

आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम् ।
बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितम् ।।
अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ।।
प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत् ।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ।।
अनेकार्थमनानार्थमनुच्छेदमशाश्वतम् ।
एतत्तल्लोकनाथानां बुद्धानां शासनामृतं ।।

ibid. 355, 372, 375, 377

कालपरीक्षा

नास्थितो गृह्यते कालः स्थितः कालो न विद्यते ।
यो गृह्येतागृहीतश्च कालः प्रज्ञप्यते कथम् ।।

ibid. 385

संभवविभवपरीक्षा

न भावाज्जायते भावो भावोऽभावान्न जायते ।
नाभावाज्जायतेऽभावोऽभावो भावान्न जायते ।।

*Mādhyamikakārikā* 419

तथागतपरीक्षा

प्रपञ्चयन्ति ये बुद्धं प्रपञ्चातीतमव्ययम् ।
ते प्रपञ्चहताः सर्वे न पश्यन्ति तथागतम् ।।
तथागतो यत्स्वभावस्तत्स्वभावमिदं जगत् ।
तथागतो निःस्वभावो निःस्वभावमिदं जगत् ।।

ibid. 448-9

विपर्यासपरीक्षा

एवं निरुध्यतेऽविद्या विपर्ययनिरोधनात् ।
अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते ।।

ibid. 469

आर्यसत्यपरीक्षा

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ।।
व्यवहारमनाश्रित्य परमार्थो न देश्यते ।
परमार्थमनागम्य निर्वाणं नाधिगम्यते ।।
सर्वं च युज्यते तस्य शून्यता यस्य युज्यते ।
सर्वं न युज्यते तस्य शून्यं यस्य न युज्यते ।।
यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ।।

ibid. 492, 494, 500, 503

निर्वाणपरीक्षा

अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ।।
न संसारस्य निर्वाणात्किंचिदस्ति विशेषणम् ।
न निर्वाणस्य संसारात्किंचिदस्ति विशेषणम् ।।

निर्वाणस्य च या कोटिः कोटिः संसरणस्य च।
न तयोरन्तरं किंचित्सुसूक्ष्ममपि विद्यते॥

*Mādhyamikakārikā* 522

दृष्टिपरीक्षा

सर्वदृष्टिप्रहाणाय यः सद्धर्ममदेशयत्।
अनुकम्पामपादाय तं नमस्यामि गौतमम्॥

ibid. 592

## YOGĀCĀRA PHILOSOPHY

## योगाचारदर्शनम्

बाह्यार्थाभावः

उत्पादं चाप्यनुत्पादं भावाभावश्च शून्यता।
नैःस्वभाव्यं च भावानां द्वयमेतन्न कल्पयेत्॥

*Laṅkāvatāra* 311

स्वविकल्पकल्पिते ह्यर्थे विकल्पः संप्रवर्तते।
अर्थो न विद्यते बाह्यो यथा तीर्थ्यैर्विकल्प्यते॥
रज्जुं यथा ह्यजानानाः सर्पं गृह्णन्ति बालिशाः।
स्वचित्तार्थमजानाना ह्यर्थं कल्पेन्ति बाहिरम्॥
तथा हि रज्जुं रज्जुत्वे एकत्वान्यत्ववर्जितम्।
किन्तु स्वचित्तदोषोऽयं येन रज्जुर्विकल्प्यते॥
न हि यो येन भावेन कल्प्यमानो न लक्ष्यते।
न तन्नास्त्यवगन्तव्यं धर्माणामेष धर्मता॥

ibid. 327

शकुनिर्यथा गगने विकल्पेन समीरितः।
अप्रतिष्ठमनालम्ब्यं चरते भूतले यथा॥
तथा हि देहिनः सर्वे विकल्पेन समीरिताः।
स्वचित्ते चंक्रमन्ते ते गगने शकुनिर्यथा॥

ibid. 343

गुणाणुद्रव्यसंघातै रूपं बालैर्विकल्प्यते।
एकैकमणुशो नास्ति अतोऽप्यर्थं न विद्यते।।
स्वचित्तं दृश्यसंस्थानं बहिर्धा ख्यायते नृणाम्।
बाह्यं न विद्यते दृश्यमतोऽप्यर्थं न विद्यते।।
चित्रं केशोण्डुकं मायां स्वप्नगन्धर्वमेव च।
अलातं मृगतृष्णां च असन्तं ख्यायते नृणाम्।।
नित्यानित्यं तथैकत्वमुभयं नोभयं तथा।
अनादिदोषसंबद्धा बालाः कल्पेन्ति मोहिताः।।

*Laṅkāvatāra* 320-1

मृगतृष्णा यथा ग्रीष्मे स्पन्दते चित्तमोहनी।
मृगा गृह्णन्ति पानीयं वस्तु तस्य न विद्यते।।
एवं विज्ञानबीजोऽयं स्पन्दते दृष्टिगोचरे।
बाला गृह्णन्ति जायन्तं तिमिरं तैमिरा यथा।।
ध्याता ध्यानं च ध्येयं च प्रहाणं सत्यदर्शनम्।
कल्पनामात्रमेवेदं यो बुध्यति स मुच्यति।।
असारका इमे धर्मा मन्यनायाः समुत्थिताः।
साप्यत्र मन्यना शून्या यया शून्येति मन्यते।।

ibid. 265

संस्कृतासंस्कृतं नास्ति अन्यत्र हि विकल्पनात्।
बाला गृह्णन्ति धिङ्मूढा वन्ध्याः स्वप्ने यथा सुतम्।।
नैःस्वाभाव्यमनुत्पादो पुद्गलः स्कन्धसंततिः।
प्रत्यया धातवो ज्ञेया शून्यता च भवाभवम्।।

ibid. 266

स्थितिभंगोत्पत्तिरहिता नित्यानित्यविवर्जिताः।
संक्लेशव्यवदानाख्या भावाः केशोण्डुकोपमाः।।

ibid. 274-5

न स्वभावो न विज्ञप्तिर्न वस्तु न च आलयः।
बालैर्विकल्पिता ह्येते वशभूतैः कुतार्किकैः।।

ibid. 276

न भूमयो न सत्यानि न क्षेत्रा न च निर्मिताः।
बुद्धाः प्रत्येकबुद्धाश्च श्रावकाश्चापि कल्पिताः।।
पुद्गलसन्ततिस्कन्धाः प्रत्यया ह्यणवस्तथा।
प्रधानमीश्वरः कर्ता चित्तमात्रे विकल्प्यते।।
चित्तं हि सर्वं सर्वत्र सर्वदेहेषु वर्तते।
विचित्रं गृह्यतेऽसद्भिश्चित्तमात्रं ह्यलक्षणम्।।
न ह्यात्मा विद्यते स्कन्धे स्कन्धाश्चैव हि नात्मनि।
न ते यथा विकल्प्यन्ते न च ते वै न सन्ति च।।

*Laṅkāvatāra* 282

अर्थद्वयं न कल्पेन्ति विज्ञानं ह्यालयोद्भवम्।
एकमर्थं द्विचित्तेन न जानीते तदुद्भवम्।।
न वक्ता न च वाच्योऽस्ति न शून्यं चित्तदर्शनात्।
अदर्शनात्स्वचित्तस्य दृष्टिजालं प्रवर्तते।।
प्रत्ययागमनं नास्ति इन्द्रियाणि न केचन।
न धातवो न च स्कन्धा न रागो न च संस्कृतम्।।
कर्मणोऽग्निं न वै पूर्वं न कृतं न च संस्कृतम्।
न कोटि न च वै शक्तिर्न मोक्षो न च बन्धनम्।।
अव्याकृतो न भावोऽस्ति धर्माधर्मं न चैव हि।
न कालं न च निर्वाणं धर्मतापि न विद्यते।।
न च बुद्धो न सत्यानि न फलं न च हेतवः।
विपर्ययो न निर्वाणं विभवो नास्ति संभवः।।
द्वादशाङ्गं न चैवास्ति अन्तानन्तं न चैव हि।
सर्वदृष्टिप्रहाणाय चित्तमात्रं वदाम्यहम्।।

ibid. 301

शून्यमनित्यं क्षणिकं बालाः कल्पन्ति संस्कृतम्।
नदीदीपादिदृष्टान्तैः क्षणिकार्थो विकल्प्यते।।
निर्व्यापारं तु क्षणिकं विविक्तं क्रियवर्जितम्।
अनुत्पत्तिं च धर्माणां क्षणिकार्थं वदाम्यहम्।।

सच्चासतो ह्यनुत्पादः सांख्यवैशेषिकैः स्मृता।
अव्याकृतानि सर्वाणि तैरेव हि प्रकाशितम्।।

*Laṅkāvatāra* 279-80

सतो हि असतश्चापि प्रत्ययैर्यदि जायते।
एकत्वान्यत्वदृष्टिश्च अवश्यं तैः समाश्रिता।।

ibid. 303

न भूतं नापि चाभूतं प्रत्ययैर्न च प्रत्ययाः।
प्रत्ययानामसद्भावादभूतं न प्रवर्तते।।
सदसत्पक्षविगतो हेतुप्रत्ययवर्जितः।
उत्पादभंगरहितः स्वपक्षो लक्ष्यवर्जितः।।
मायास्वप्नोपमं लोकं हेतुप्रत्ययवर्जितम्।
अहेतुकं सदा पश्यन्विकल्पो न प्रवर्तते।।
गन्धर्वमृगतृष्णाभं केशोण्डुकनिभं सदा।
सदसत्पक्षविगतं हेतुप्रत्ययवर्जितम्।
अहेतुकं भवं पश्यंश्चित्तधारा विशुध्यते।।

ibid. 334-5

चित्तमात्रम्

द्वारं हि परमार्थस्य विज्ञप्तिद्वयवर्जितम्।
यानत्रयव्यवस्थानं निराभासे स्थितं कुतः।।
चित्तमात्रं निराभासं विहारा बुद्धभूमिश्च।
एतद्धि भाषितं बुद्धैर्भाषन्ते भाषयन्ति च।।

ibid. 278

नैकायिकाश्च तीर्थ्याश्च दृष्टिमेकांशमाश्रिताः।
चित्तमात्रे विसंमूढा भावं कल्पेन्ति बाहिरम्।।
प्रत्येकबोधिं बुद्धत्वमर्हत्त्वं बुद्धदर्शनम्।
गूढबीजं भवेद्बोधौ स्वप्ने वै सिध्यते तु यः।।

ibid. 294

चित्तमात्रावबोधेन बाह्यभावा व्युदाश्रया।
विनिवृत्तिर्विकल्पस्य प्रतिपत् सैव मध्यमा।।

चित्तमात्रं न दृश्यन्ति दृश्याभावान्न जायते।
प्रतिपन्मध्यमा चैषा मया चान्यैश्च देशिता ।।

*Laṅkāvatāra* 311

न भावं नापि चाभावं भावाभावविवर्जितम् ।
तथता चित्तनिर्मुक्तं चित्तमात्रं वदाम्यहम् ।।
तथता शून्यता कोटी निर्वाणं धर्मधातुकम् ।
कायं मनोमयं चित्तं चित्तमात्रं वदाम्यहम् ।।
विकल्पवासनाबद्धं विचित्रं चित्तसंभवम् ।
बहिर्धा जायते नृणां चित्तमात्रं हि लौकिकम् ।।
दृश्यं न विद्यते बाह्यं चित्तचित्रं विदृश्यते ।
देहभोगप्रतिष्ठाभं चित्तमात्रं वदाम्यहम् ।।
श्रावकाणां क्षयज्ञानं बुद्धानां जन्मसंभवम् ।
प्रत्येकजिनपुत्राणां असंक्लेशात्प्रवर्तते ।।
बहिर्धा नास्ति वै रूपं स्वचित्तं दृश्यते बहिः ।
अनवबोधात्स्वचित्तस्य बालाः कल्पेन्ति संस्कृतम् ।।

ibid. 325-6

वस्तु न विद्यते पश्यंश्चित्तमात्रं न विद्यते ।
अवस्तुकं कथं चित्तं चित्तमात्रं न युज्यते ।।
वस्तुमालम्बनीकृत्य चित्तं संजायते नृणाम् ।
अहेतुकं कथं चित्तं चित्तमात्रं न युज्यते ।।
तथता चित्तमात्रं च आर्यवस्तुनयस्य तु ।
विद्यन्ते न च विद्यन्ते न ते मन्नयकोविदाः ।।
ग्राह्यग्राहकभावेन यदि चित्तं प्रवर्तते ।
एतद्धि लौकिकं चित्तं चित्तमात्रं न युज्यते ।।
देहभोगप्रतिष्ठाभं स्वप्नवज्जायते यदि ।
द्विचित्तता प्रसज्येत न च चित्तं द्विलक्षणम् ।।
स्वधारं हि यथा खड्गं स्वाग्रं वै अंगुलिर्यथा ।
न च्छिन्दते न स्पृशते तथा चित्तं स्वदर्शने ।।

ibid. 335

सर्वभावा ह्यनुत्पन्ना असत्सदसंभवाः ।
चित्तमात्रमिदं सर्वं कल्पनाभिश्च वर्जितम् ।।

*Laṅkāvatāra* 342

व्यावृत्तिः सर्वदृष्टीनां कल्प्यकल्पनवर्जिता ।
अनुपलम्भो ह्यजातिश्च चित्तमात्रं वदाम्यहम् ।।

ibid. 325

विज्ञप्तिमात्रं त्रिभवं स्वभावद्वयकल्पितम् ।
परावृत्तस्तु तथता धर्मपुद्गलसंचरात् ।।
सोमभास्करदीपार्चिर्भूतानि मणयस्तथा ।
निर्विकल्पाः प्रवर्तन्ते तथा बुद्धस्य बुद्धता ।।

ibid. 274

संभवं विभवं चैव मोहात्पश्यन्ति बालिशाः ।
न संभवं न विभवं प्रज्ञायुक्तो विपश्यति ।।
अकनिष्ठभवने दिव्ये सर्वपापविवर्जिते ।
निर्विकल्पाः सदा युक्ताश्चित्तचैत्तविवर्जिताः ।।
बलाभिज्ञावशिप्राप्ताः तत्समाधिगतिंगताः ।
तत्र बुध्यन्ति संबुद्धा निर्मितस्त्विह बुध्यते ।।

ibid. 269

चित्तमात्रं यदा लोकं प्रपश्यन्ति जिनात्मजाः ।
तदा नैर्माणिकं कायं क्रियासंस्कारवर्जितम् ।
लभन्ते ते बलाभिज्ञावशितैः सह संयुतम् ।।

ibid. 276

आलयविज्ञानम्

चित्तमालयविज्ञानं मनो यन्मन्यनात्मकम् ।
गृह्णाति विषयान्येन विज्ञानं हि तदुच्यते ।।
चित्तमव्याकृतं नित्यं मनो ह्युभयसंचरम् ।
वर्तमानं हि विज्ञानं कुशलाकुशलं हि तत् ।।

ibid. 278

आलयौघस्तथा नित्यं विषयपवनेरितः ।
चित्रैस्तरंगविज्ञानैर्नृत्यमानः प्रवर्तते ।।

परमालयविज्ञानं विज्ञप्तिरालयं पुनः ।
ग्राह्यग्राहकापगमात्तथतां देशयाम्यहम् ।।
नास्ति स्कन्धेष्वात्मा न सत्त्वो न च पुद्गलः ।
उत्पद्यते च विज्ञानं विज्ञानं च निरुध्यते ।।
निम्नोन्नतं यथा चित्रे दृश्यते न च विद्यते ।
तथा भावेषु भावत्वं दृश्यते न च विद्यते ।।

*Laṅkāvatāra* 272

यथा न भावो नाभावो गगनं कथ्यते मया ।
आलयं हि तथा काये भावाभावविवर्जितम् ।।

ibid. 296

चक्षुश्च रूपमालोक आकाशश्च मनस्तथा ।
एभिरुत्पद्यते नृणां विज्ञानं ह्यालयोद्भवम् ।।

ibid. 299

उदधेः परिणामासौ तरंगाणां विचित्रता ।
आलयं हि तथा चित्रं विज्ञानाख्यं प्रवर्तते ।।

ibid. 314

उदधेश्च तरंगाणां यथा नास्ति विशेषणम् ।
विज्ञानानां तथा चित्ते परिणामो न लभ्यते ।।

ibid.

नीलरक्तप्रकारं हि तरंगेषु न विद्यते ।
वृत्तिश्च वर्ण्यते चित्ते लक्षणार्थं हि बालिशाः ।।
देहभोगप्रतिष्ठानं विज्ञानं ख्यायते नृणाम् ।
तेनास्य दृश्यते वृत्तिस्तरंगैः सह सादृशाः ।।
बालानां बुद्धिवैकल्यादालयं ह्युदधेर्यथा ।
तरंगवृत्तिसाधर्म्या दृष्टान्तेनोपनीयते ।।
उदधेर्यथा तरंगाणि दर्पणे सुपिने यथा ।
दृश्यन्ते युगपत्काले तथा चित्तं स्वगोचरे ।
वैकल्याद्विषयाणां हि क्रमवृत्त्या प्रवर्तते ।।

ibid. 315

दृश्यं न विद्यते चित्तं चित्तं दृश्यात्प्रमुह्यते ।
देहभोगप्रतिष्टानमालयं ख्यायते नृणाम् ।।

*Laṅkāvatāra* 320

परिकल्पित-परतन्त्र-स्वभावः

यथाजल्पार्थसंज्ञाया निर्मित्तं तस्य वासना ।
तस्मादप्यथ विज्ञानं परिकल्पितलक्षणम् ।।
यथानामार्थमर्थस्य नाम्नः प्रख्यानता च या ।
असंकल्पनिमित्तं हि परिकल्पितलक्षणम् ।।
त्रिविधत्रिविधाभासो ग्राह्यग्राहकलक्षणः ।
अभूतपरिकल्पो हि परतन्त्रस्य लक्षणम् ।।
अभावभावता या च भावाभावसमानता ।
अशान्तशान्ताऽकल्पा च परिनिष्पन्नलक्षणम् ।।

*Sūtrālaṅkāra* 64

परिकल्पितं स्वभावेन सर्वधर्मा अजानकाः ।
परतंत्रं समाश्रित्य विकल्पो भ्रमते नृणाम् ।।
परतंत्रं यथा शुद्धं विकल्पेन विसंयुतम् ।
परावृत्रं हि तथता विहारः कल्पवर्जितः ।।
मा विकल्पं विकल्पेथ विकल्पो नास्ति सत्यतः ।
भ्रान्तिं विकल्पयन्तस्य ग्राह्यग्राहकयोर्न तु ।
बाह्यार्थदर्शनं कल्पं स्वभावः परिकल्पितः ।।
येन कल्पेन कल्पेन्ति स्वभावः प्रत्ययोद्भवः ।
बाह्यार्थदर्शनं मिथ्या नास्त्यर्थं चित्तमेव तु ।।

*Laṅkāvatāra* 284-5

परकल्पितस्वभावोऽस्ति परतंत्रो न विद्यते ।
कल्पितं गृह्यते भ्रान्त्या परतंत्रं न कल्प्यते ।।

ibid. 302

निमित्तदौष्ठुल्यमयं बन्धनं चित्तसंभवम् ।
परिकल्पितं ह्यजानानैः परतंत्रं विकल्प्यते ।।

य एव कल्पितो भावः परतंत्रं तदेव हि।
कल्पितं हि विचित्राभं परतंत्रं विकल्प्यते ।।

*Laṅkāvatāra* 303-4

परिकल्पितं दशविधं परतंत्रं च षड्विधम्।
तथता च प्रत्यात्मगतिमतो नास्ति विशेषणम् ।।

ibid. 305

निमित्तं परतंत्रं हि यन्नाम तत्र कल्पितम्।
परिकल्पितनिमित्तं पारतन्त्र्यात्प्रवर्तते ।।
बुद्धया विवेच्यमानं हि न तंत्रं नापि कल्पितम्।
निष्पन्नो नास्ति वै भावः कथं बुद्धया प्रकल्प्यते ।।

ibid. 312

परिनिष्पन्नस्वभावः
तथता शून्यता कोटिर्निर्वाणं धर्मधातुकम्।
अनुत्पादश्च धर्माणां स्वभावः पारमार्थिकः ।।

ibid. 336

न पुद्गलो न च स्कन्धा बुद्धो ज्ञानमनास्रवम्।
सदा शान्ति विभावित्वा गच्छामि शरणं ह्यहम् ।।
प्रकृतिप्रभास्वरं चित्तमुपक्लेशैर्मनादिभिः।
आत्मना सह संयुक्तं देशेति वदतांवरः ।।

ibid. 358

धर्माणां निःस्वभावत्वं परमार्थेऽपि दृश्यते।
उपलब्धिनिःस्वभावे संवृतिस्तेन उच्यते ।।

ibid. 280

वासनैर्लुडितं चित्तमर्थाभासं प्रवर्तते।
कल्पद्वयनिरोधेन ज्ञानं तथतगोचरम् ।।

ibid. 285

अद्वया तथता शून्या भूतकोटिश्च धर्मता।
निर्विकल्पश्च देशेमि ये ते निष्पन्नलक्षणाः ।।

ibid. 288

अजातशून्यता चैकमेकं जातेषु शून्यता।
अजातशून्यता श्रेष्ठा नश्यते जातशून्यता ।।

तथता शून्यता कोटी निर्वाणं धर्मधातुवत् ।
कायो मनोमयं चित्रं पर्यायैर्देशितं मया ।।

*Laṅkāvatāra* 290

मनोविज्ञानव्यावृत्तं चित्तं कालुष्यवर्जितम् ।
सर्वधर्मावबोधेन चित्तं बुद्धं वदाम्यहम् ।।

ibid. 296

चित्तमात्रं समारुह्य बाह्यमर्थं न कल्पयेत् ।
तथतालम्बने स्थित्वा चित्तमात्रमतिक्रमेत् ।।
चित्तमात्रमतिक्रम्य निराभासमतिक्रमेत् ।
निराभासस्थितो योगी महायानं न पश्यते ।।
अनाभोगगतिः शान्ता प्रणिधानैर्विशोधिता ।
ज्ञानमनात्मकं श्रेष्ठं निराभासं न पश्यति ।।

ibid. 298-9

चित्तदृश्यपरिज्ञानाद्विकल्पो न प्रवर्तते ।
अप्रवृत्तिर्विकल्पस्य तथता चित्तवर्जिता ।।

ibid. 311

न चान्तरं किंचन विद्यतेऽनयोः सदर्थवृत्त्या शमजन्मनोरिह ।
तथापि जन्मक्षयतो विधीयते शमस्य लाभः शुभकर्मकारिणाम् ।।

*Commentary :*

न चास्ति संसारनिर्वाणयोः किंचिन्नानाकरणं परमार्थवृत्त्या नैरात्म्यस्य समतया । तथापि जन्मक्षयान्मोक्षप्राप्तिर्भवत्येव शुभकर्मकारिणां ये मोक्षमार्गं भावयन्ति ।

*Sūtrālaṅkāra* 23

आदौ तत्वेऽन्यत्वे स्वलक्षणे स्वयमथान्यथाभावे ।
संक्लेशेऽथ विशेषे क्षान्तिरनुत्पत्तिधर्मोक्ता ।।

ibid. 68

विद्यास्थाने पंचविधे योगमकृत्वा सर्वज्ञत्व नैति कथंचित्परमार्थः ।
इत्यन्येषां निग्रहणानुग्रहणाय स्वाज्ञार्थं वा तत्र करोत्येव स योगम् ।।

ibid. 70

भूतानां षड्विधार्थस्य क्षणिकत्वं विधीयते ।
शोषवृद्धेः प्रकृत्या च चलत्वाद् वृद्धिहानितः ।।
तत्संभवात्पृथिव्याश्च परिणामचतुष्टयात् ।
वर्णगन्धरसस्पर्शतुल्यत्वाच्च तथैव तत् ।।
इन्धनाधीनवृत्तित्वात्तारतम्योपलब्धितः ।
चित्तानुवृत्तेः पृच्छातः क्षणिकं बाह्यमप्यतः ।।
प्रज्ञप्त्यस्तितया वाच्यः पुद्गलो द्रव्यतो न तु ।
नोपलम्भाद्विपर्यासात् संक्लेशात् क्लिष्टहेतुतः ।।
एकत्वान्यत्वतो वाच्यस्तस्माद्दोषद्वयादसौ ।
स्कन्धात्मत्वप्रसंगाच्च तद्द्रव्यत्वप्रसंगतः ।।
द्रव्यसन् यद्यवाच्यश्च वचनीयं प्रयोजनम् ।
एकत्वान्यत्वतोऽवाच्यो न युक्तो निष्प्रयोजनः ।।

*Sūtrālaṅkāra* 153-4

वसुबन्धुमतम्

यतः स्वबीजाद्विज्ञप्तिर्यदाभासा प्रवर्तते ।
द्विविधायतनत्वेन ते तस्या मुनिरब्रवीत् ।।

*Commentary*

किमुक्तं भवति । रुपप्रतिभासा विज्ञप्तिर्यतः स्वबीजात्परिणामविशेषप्राप्तादुत्पद्यते तच्च बीजं यत्प्रतिभासा च सा ते तस्या विज्ञप्तेश्चक्षूरुपायतनत्वेन यथाक्रमं भगवानब्रवीत् । एवं यावत् स्पष्टव्यप्रतिभासा विज्ञप्तिर्यतः स्वबीजात्परिणामविशेषप्राप्तादुत्पद्यते । तच्च बीजं यत्प्रतिभासा च सा ते तस्या कायस्प्रष्टव्यायतनत्वेन यथाक्रमं भगवानब्रवीदित्ययमभिप्रायः । एवं पुनरभिप्रायवशेन देशयित्वा को गुणः ।

तथा पुद्गलनैरात्म्यप्रवेशो ह्यन्यथा पुनः ।
देशना धर्मनैरात्म्यप्रवेशः कल्पितात्मना ।।

*Commentary*

तथा हि देश्यमाने पुद्गलनैरात्म्यं प्रविशन्ति । द्वयाद्विज्ञानषट्कं प्रवर्तते । न तु कश्चिदेको द्रष्टास्ति न यावन्मन्तेत्येवं विदित्वा ये पुद्गलनैरात्म्यदेशना-विनेयास्ते पुद्गलनैरात्म्यं प्रविशन्ति ।

अन्येथेति विज्ञप्तिमात्रदेशना कथं धर्मनैरात्म्यप्रवेशः। विज्ञप्तिमात्रमिदं रूपादि धर्मप्रतिभासमुत्पद्यते न तु रूपादिलक्षणो धर्मः कोऽप्यस्तीति विदित्वा। यदि तर्हि सर्वथा धर्मो नास्ति तदपि विज्ञप्तिमात्रं नास्तीति कथं तर्हि व्यवस्थाप्यते। न खलु सर्वथा धर्मो नास्तीत्येवं धर्मनैरात्म्यप्रवेशो भवति।

अपि तु यो बालैर्धर्माणां स्वभावो ग्राह्यग्राहकादिः परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं न त्वनभिलाप्येनात्मना यो बुद्धानां विषय इति। एवं विज्ञप्तिमात्रस्यापि विज्ञप्त्यन्तरपरिकल्पितेनात्मना नैरात्म्यप्रवेशात् विज्ञप्तिमात्रव्यवस्थापनया सर्वधर्माणां नैरात्म्यप्रवेशो भवति न तु तदास्तित्वापवादात्। इतरथा हि विज्ञप्तेरपि विज्ञप्त्यन्तरमर्थः स्यादिति विज्ञप्तिमात्रत्वं न सिध्येतार्थवतीत्वाद्विज्ञप्तीनाम्। कथं पुनरिदं प्रत्येतव्यमनेनाभिप्रायेण भगवता रूपाद्यायतनास्तित्वमुक्तं न पुनः सन्त्येव तानि यानि रूपादिविज्ञप्तीनां प्रत्येकं विषयीभवन्तीति।

*Vijñaptimātratāsiddhi*, *Viṃśatikā* 5-6

आत्मधर्मोपचारो हि विविधो यः प्रवर्तते।
विज्ञानपरिणामेऽसौ परिणामः स च त्रिधा।।
विपाको मननाख्यश्च विज्ञप्तिर्विषयस्य च।
तत्रालयाख्यं विज्ञानं विपाकः सर्वबीजकम्।।

ibid. *Triṃśikā* 13

येन येन विकल्पेन यद्यद् वस्तु विकल्प्यते।
परिकल्पित एवासौ स्वभावो न स विद्यते।।
परतन्त्रस्वभाववस्तु विकल्पः प्रत्ययोद्भवः।
निष्पन्नस्तस्य पूर्वेण सदा रहितता तु या।।
अत एव स नैवान्यो नानन्यः परतन्त्रतः।
अनित्यतादिवद् वाच्यो नादृष्टेऽस्मिन् स दृश्यते।।
त्रिविधस्य स्वभावस्य त्रिविधां निःस्वभावताम्।
संधाय सर्वधर्माणां देशिता निःस्वभावता।।

ibid. 14

योगाचारपरमार्थोपलब्धेरुपायः

चित्तस्य गोचरं पश्येत्पश्येज्ज्ञानस्य गोचरम् ।
प्रज्ञया गोचरं पश्येल्लक्षणे न प्रमुह्यते ।।
चित्तस्य दुःखसत्यं समुदयो ज्ञानगोचरः ।
द्वे सत्ये बुद्धभूमिश्च प्रज्ञा यत्र प्रवर्तते ।।
फलप्राप्तिश्च निर्वाणं मार्गमष्टाङ्गिकं तथा ।
सर्वधर्मावबोधेन बुद्धज्ञानं विशुध्यते ।।

*Laṅkāvatāra* 299

उत्पादभङ्गनिर्मुक्तं सदसत्पक्षवर्जितम् ।
लक्ष्यलक्षणसंयुक्तं योगी लोकं विभावयेत् ।।
समाधिबलसंयुक्तमभिज्ञैर्वशितैश्च वै ।
न चिरात्तु भवेद्योगी यद्युत्पादं न कल्पयेत् ।।
अणुकालप्रधानेभ्यः कारणेभ्यो न कल्पयेत् ।
हेतुप्रत्ययसंभूतं योगी लोकं न कल्पयेत् ।।
स्वकल्पकल्पितं लोकं चित्रं वै वासनोदितम् ।
प्रतिपश्येत्सदा योगी मायास्वप्नोपमं भवम् ।।
अपवादसमारोपवर्जितं दर्शनं सदा ।
देहभोगप्रतिष्ठाभं त्रिभवं न विकल्पयेत् ।।
कृतभक्तपिण्डो निश्चितमृजुं संस्थाप्य वै तनुम् ।
बुद्धांश्च बोधिसत्त्वांश्च नमस्कृत्य पुनः पुनः ।।
विनयात्सूत्रयुक्तिभ्यां तत्त्वं संहृत्य योगवित् ।
पञ्चधर्मस्वचित्तं च नैरात्म्यं च विभावयेत् ।।

ibid. 309

चित्तं विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च ।
आलयं त्रिभवश्चेष्टा एते चित्तस्य पर्यायाः ।।
आयुरुष्माथ विज्ञानमालयो जीवितेन्द्रियम् ।
मनश्च मनविज्ञानं विकल्पस्य विशेषणम् ।।
चित्तेन धार्यते कायो मनो मन्यति वै सदा ।
विज्ञानं चित्तविषयं विज्ञानैः सह छिन्दति ।।

तृष्णा हि माता इत्युक्ता अविद्या च तथा पिता।
विषयावबोधाद्विज्ञानं बुद्ध इत्युपदिश्यते ।।
अर्हन्तो ह्यनुशय्याः स्कन्धाः संघः स्कन्धकपञ्चकः।
निरन्तरान्तरच्छेदात्कर्म ह्यानन्तरं भवेत् ।।
नैरात्म्यस्य द्वयं क्लेशाः तथैवावरणद्वयम्।
अचिन्त्यपरिणामिन्याश्च्युतेर्लाभास्तथागताः ।।

*Laṅkāvatāra*, 322-3

स्वदेहस्य परित्यागः संपत्तेश्चैव संवृतौ।
दुर्बलेषु क्षमा काये जीविते निरपेक्षिणः ।।
वीर्यारम्भो ह्यनास्वादो ध्यानेषु सुख एव च।
निष्कल्पना च प्रज्ञायामाश्चर्यं धीमतां गतम् ।।
तथागतकुले जन्म लाभो व्याकरणस्य च।
अभिषेकस्य च प्राप्तिर्बोधेश्चाश्चर्यमिष्यते ।।

*Sūtrālaṅkāra* 160

## CRITICISM OF NON-BUDDHIST DOCTRINES

### तीर्थ्यमतापवादः

भविष्यन्त्यनागते काले मम शासनदूषकाः।
काषायवासवसनाः सदसत्कार्यवादिनः ।।५४६
असन्तः प्रत्ययैर्भावा विद्यन्ते ह्यार्यगोचरम्।
कल्पितो नास्ति वै भावः कल्पयिष्यन्ति तार्किकाः ।।
भविष्यन्त्यनागते काले कणभुग्बालजातिकाः।
असत्कार्यवाददुर्दृष्टया जनतां नाशयन्ति च ।।
अणुभ्यो जगदुत्पन्नमणवश्चाप्यहेतुकाः।
नवद्रव्याणि नित्यानि कुदृष्टया देशयिष्यति ।।
द्रव्यैरारभ्यते द्रव्यं गुणैश्चैव गुणास्तथा।
भावानां भावतामन्यां सतीं वै नाशयिष्यति ।।

*Laṅkāvatāra* p. 333

तज्जीवं तच्छरीरं च यच्चाभूत्वा प्रवर्तते ।
परवादा ह्यमी सर्वे मया च समुदाहृताः ।।
प्रधानाज्जगदुत्पन्नं कपिलांगोऽपि दुर्मतिः ।
शिष्येभ्यः संप्रकाशेति गुणानां च विकारिता ।।

*Laṅkāvatāra* 334

अहेतुवादैर्देश्यन्ते तीर्थ्यानां जायते भयम् ।
कथं केन कुतः कुत्र संभवोऽहेतुको भवेत् ।।

ibid. 338

सांख्या वैशेषिका नग्ना विप्राः पाशुपतास्तथा ।
असत्सद्दृष्टिपतिता विविक्तार्थविवर्जिताः ।।

ibid. 342-3

सांख्या वैशेषिका नग्नास्तार्किका ईश्वरोदिताः ।
सदसत्पक्षपतिता विविक्तार्थविवर्जिताः ।।

ibid. 354

चतुर्विधं व्याकरणमेकांशपरिपृच्छनम् ।
विभज्य-स्थापनीयं च तीर्थवादनिवारणम् ।।

ibid 280

न स्वभावो न विज्ञप्तिर्न वस्तु न च आलयः ।
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः ।।

ibid. 167

निर्वाणदृष्टयस्तीर्थ्या विकल्पेन्ति पृथक्पृथक् ।
कल्पनामात्रमेवैषां मोक्षोपायो न विद्यते ।।
बन्ध्यबन्धननिर्मुक्ता उपायैश्च विवर्जिताः ।
तीर्थ्या मोक्षं विकल्पेन्ति न च मोक्षो हि विद्यते ।।
अनेकभेदभिन्नो हि तीर्थ्यानां दृश्यते नयः ।
अतस्तेषां न मोक्षोऽस्ति कस्मान्मूढैर्विकल्प्यते ।।
कार्यकारणदुर्दृष्टया तीर्थ्याः सर्वे विमोहिताः ।
अतस्तेषां न मोक्षोऽस्ति सद्सत्पक्षवादिनाम् ।।
जल्पप्रपञ्चाभिरता हि बालास्तत्त्वे न कुर्वन्ति मतिं विशालाम् ।
जल्पो हि त्रैधातुक-दुःखयोनिस्तत्त्वं हि दुःखस्य विनाशहेतुः ।।

ibid. 185-6

BODHISATTVA'S BIRTH-STORIES

## जातकं चावदानम्

कुम्भजातकम्

गुणसंवर्णनं नाम दोषाणां च निगूहनम् ।
प्रसिद्ध इति लोकस्य पण्यानां विक्रयक्रमः ।।

*Jātakamālā* 102

श्रेष्ठिजातकम्

राजोवाच । नार्हति भवान्जनप्रवादमात्रकेणास्मान्परित्यक्तुम् । न हि भवद्विधानां जनप्रवादसंपादनाभिराध्या गुणविभूतिस्तदसंपादनविराध्या वा ।

स्वेच्छाविकल्पग्रथिताश्च तास्ता निरंकुशा लोककथा भ्रमन्ति ।
कुर्वीत यस्ता हृदयेऽपि तावत्स्यात्सोऽपहास्यः किमुत प्रपत्ता ।।

बोधिसत्व उवाच । मा मैवं महाराज । न हि कल्याणो जनप्रवादो नानुविधेयः । पश्यतु देवः ।

कल्याणधर्मेति यदा नरेन्द्र संभावनामेति मनुष्यधर्मा ।
तस्या न हीयेत नरः सधर्मा ह्रियापि तावद्धुरमुद्वहेत्ताम् ।।
संभावनायां गुणभावनायां संदृश्यमानो हि यथा तथा वा ।
विशेषतो भाति यशःप्रसिद्धचा स्यात्त्वन्यथा शुष्क इवोदपानः ।।
गुणप्रवादैरयथार्थवृद्धैर्विमर्शपाताकुलितैः पतद्भिः ।
विचूर्णिता कीर्तितनुर्नराणां दुःखेन शक्नोति पुनः प्रसर्तुम् ।।
तद्वर्जनीयान्परिवर्जयन्तं परिग्रहान्विग्रहहेतुभूतान् ।
क्रोधोच्छ्रिरस्कानिव कृष्णसर्पान्युक्तोऽसि मां देव न संनिषेद्धुम् ।।
स्नेहेन भक्तिज्ञतया च कामं युक्तो विधिर्भृत्यजने तवायम् ।
वित्तेन तु प्रव्रजितस्य किं मे परिग्रहक्लेशपरिग्रहेण ।।

*Jātakamāla* 119

महाबोधिजातकम्

अथैनं ददर्श तैरमात्यैर्यथाभिनिविष्टानि दृष्टिगतानि प्रति प्रतार्यमाणम् । कश्चिदेनममात्यो दुर्विभाव्यहेतुभिर्निदर्शनैरहेतुवादं प्रति प्रचकर्ष ।

क: पद्मनालदलकेशरकर्णिकानां
संस्थानवर्णरचनामृदुतादिहेतु: ।
पत्राणि चित्रयति कोऽत्र पतत्रिणां वा
स्वाभाविकं जगदिदं नियतं तथैव ।।

अपर ईश्वरकारणमस्मै स्वबुद्धिरुचितमुपवर्णयामास ।

नाकस्मिकं भवितुमर्हति सर्वमेत-
दस्त्यत्र सर्वमधि कश्चिदनन्त एक: ।
स्वेच्छाविशेषनियमाद्य इमं विचित्रं
लोकं करोति च पुनश्च समीकरोति ।।

सर्वमिदं पूर्वकर्मकृतं सुखासुखम् । न प्रयन्नसामर्थ्यमस्तीत्येवमन्य एनं विग्राहयामास ।

एक: करिष्यति कथं नु समानकालं
भिन्नाश्रयान्बहुविधानमितांश्च भावान् ।
सर्वं तु पूर्वकृतकर्मनिमित्तमेतत्——
सौख्यप्रयत्ननिपुणोऽपि हि दु:खमेति ।।

अपर उच्छेदवादकथाभिरेनं कामभोगप्रसंग एव प्रतारयामास ।

दारूणि नैकविधवर्णगुणाकृतीनि
कर्मात्मकानि न भवन्ति भवन्ति चैव ।
नष्टानि नैव च यथा पुनरुद्भवन्ति
लोकस्तथायमिति सौख्यपरायण: स्यात् ।।

अपर एनं क्षत्रविद्यापरिदृष्टेषु नीतिकौटिल्यप्रसंगेषु नैर्घृण्यमलिनेषु धर्मविरोधिष्वपि राजधर्मोऽयमिति समनुशशास ।

छायाद्रुमेष्विव नरेषु कृताश्रयेषु
तावत्कृतज्ञचरितै: स्वयश: परीप्सेत् ।
नार्थोऽस्ति यावदुपभोगनयेन तेषां
कृत्ये तु यज्ञ इव ते पशवो नियोज्या: ।।

इति तेऽमात्यास्तं राजानं तेन तेन दृष्टिकृतोन्मार्गेण नेतुमीषु: ।।
अथ बोधिसत्त्व: पापजनसंपर्कवशात्परप्रत्ययनेयबुद्धित्वाच्च दृष्टिकृत-

प्रपाताभिमुखमवेक्ष्य राजानं तदनुकम्पासमावर्जितहृदयस्तन्निवर्तनोपायं विममर्श।

गुणाभ्यासेन साधूनां कृतं तिष्ठति चेतसि।
भ्रश्यत्यपकृतं तस्माज्जलं पद्मदलादिव॥

*Jātakamālā, Mahābodhi-jātakaṁ* 146-7

अयोगृह-जातकम्

राजोवाच। अथ वने तव क आश्वास एवमप्रतिक्रिये मृत्युभये सति धर्मपरिग्रहे च।

किं त्वा वने न समुपैष्यति मृत्युशत्रु-
धर्मे स्थिताः किमृषयो न वने विनष्टाः।
सर्वत्र नाम नियतः क्रम एष तत्र
कोऽर्थो विहाय भवनं वनसंश्रयेण॥

बोधिसत्त्व उवाच।

कामं स्थितेषु भवने च वने च मृत्यु–
र्धर्मात्मकेषु विगुणेषु च तुल्यवृत्तिः।
धर्मात्मनां भवति न त्वनुतापहेतु–
र्धर्मश्च नाम वन एव सुखं प्रपत्तुम्॥

पश्यतु देवः।

प्रमादमदकन्दर्पलोभद्वेषास्पदे गृहे।
तद्विरूद्धस्य धर्मस्य कोऽवकाशपरिग्रहः॥

विकृष्यमाणो बहुभिः कुकर्मभिः परिग्रहोपार्जनरक्षणाकुलः।
अशान्तचेता व्यसनोदयागमैः कदा गृहस्थः शममार्गमेष्यति॥
वने तु संत्यक्तकुकार्यविस्तरः परिग्रहक्लेशविवर्जितः सुखी।
शमैककार्यः परितुष्टमानसः सुखं च धर्मं च यशांसि चार्छति॥

धर्मश्च रक्षति नरं न धनं बलं वा
धर्मः सुखाय महते न विभूतिसिद्धिः।
धर्मात्मनश्च मुदमेव करोति मृत्यु–
र्नह्यस्ति दुर्गतिभयं निरतस्य धर्मे॥

*Jātakamālā* 231

क्षान्त्यवदानम्

पुरा मुनिः क्षान्तिरतिर्वनेऽस्मिन्नुवास निर्वासितरोषदोषः।
योऽभूद्भुवो रागरजःस्वभावे विद्वेषवानिन्दुरिवारविन्दे ॥
अथोत्तराशाधिपतिर्वसन्ते वनान्तरालोकनकौतुकेन।
सान्तःपुरः केलिसुखाय कामी तदाश्रमोपान्तमहीमवाप॥
रागी कलिर्नाम स भूमिपालः पादप्रहारैर्वदनासवैश्च।
लेभे विलासेषु नितम्बिनीनामशोकशोभां वकुलश्रियं च।
दिशस्तपोलोपपृथुप्रकोपभ्रूभंगवृन्दैरिव तापसानाम्।
तत्र भ्रमद्भिर्भ्रमरैर्बभुवुः कामाग्निधूमैरिव सान्धकाराः॥
लीलाविलोलाः पवनाकुलालीस्तनावनम्राः स्तबका लतानाम्।
रक्ताधराः पाटलपल्लवानां प्रापुर्विलासं ललना लतानाम्।
राजांगनाः कौतुकविभ्रमेण वने चरन्त्यस्तमृषिं विलोक्य।
अचंचलध्यानसमाधिसक्तं विमुक्तरागं परिवार्य तस्थुः॥
तद्देशमभ्येत्य नरेश्वरोऽथ दृष्ट्वा वधूभिः परिवारितं तम्।
ईर्ष्याप्रकोपानलदुर्निरीक्ष्यः चिच्छेद तस्याशु स पाणिपादम्॥
छिन्नांगवर्गोऽपि स निर्विकारश्चुकोप भूपाय न नाम धीरः।
न्यवारयत् क्रूरतरंच तस्मै गन्धर्वयक्षोरगदेवसंघम्॥
ततः प्रयाते नृपतौ पुरं स्वां समेत्य सर्वे मुनयो वनेभ्यः।
तं तत्र कृत्तावयवं विलोक्य क्षान्ता अपि क्रोधधुता बभूवुः॥
शापप्रदानाभिमुखान् निवार्य क्षन्तव्यमित्येव स तानुवाच।
क्षमासमालिंगितमानसानां कोपक्रियाभिः क्रियते न संगः॥
विकारवेगोऽपि न पाणिपादच्छेदे ममाभूद् यदि वीतमन्योः।
सत्येन तेनाक्षतदेह एव स्यामित्यवादीत् स पुनः प्रसादी॥
ततः क्षणात् संगतपाणिपादं रुढव्रणं प्रेत्य सदोदयेन।
अपूजयत् क्षान्तिगुणं स्तवेन तं देवता सत्त्वमितैश्च पुष्पैः॥
राजापि तत् किल्बिषकालकूटविस्फोटसंघट्टविनष्टचेष्टः।
पूरोत्कटावर्त्तविवर्तमानः संवर्तपाकं नरकं जगाम॥

*Bodhisattvāvadānakalpalatā* I. 935-41)

शार्दूलकर्णविदानम् (मातङ्गदारिकापरिव्राजनम्)

एवं मया श्रुतम्। एकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म। जेतवनेऽनाथपिण्डदस्यारामे।

अथायुष्मानानन्दः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं महानगरीं पिण्डाय प्राविक्षत्। अथायुष्मानानन्दः श्रावस्तीं पिण्डाय चरित्वा कृतभक्तकृत्यो येनान्यतममुदपानं तेनोपसंक्रान्तः।

तेन खलु समयेन तस्मिन्नुदपाने प्रकृतिर्नाम मातङ्गदारिका उदकमुद्धरते स्म। अथायुष्मानानन्दः प्रकृतिं मातङ्गदारिकामेतदवोचत्। देहि मे भगिनि पानीयं पास्यामि।

एवमुक्ते प्रकृतिर्मातङ्गदारिकायुष्मन्तमानन्दमिदमवोचत्। मातङ्गदारिकाहमस्मि भदन्तानन्द। नाहं ते भगिनि कुलं वा जातिं वा पृच्छामि। अपि तु सचेत्ते परित्यक्तं पानीयं देहि पास्यामि।

अथ प्रकृतिर्मातङ्गदारिकायुष्मत आनन्दाय पानीयमदात्। अथायुष्मानानन्दः पानीयं पीत्वा प्रक्रान्तः।

अथ प्रकृतिर्मातङ्गदारिकायुष्मत आनन्दस्य शरीरे मुखे स्वरे साधु च सुष्टु च निमित्तमुद्गृहीत्वा योनिशो मनसिकारेणाविष्टा संरागचित्तमुत्पादयति स्म। आर्यो मे आनन्दः स्वामी स्यादिति। माता च मे महाविद्याधरी। सा शक्ष्यत्यार्यमानन्दमानयितुम्।

अथ प्रकृतिर्मातङ्गदारिका पानीयघटमादाय येन चण्डालगृहं तेनोपसंक्रम्य पानीयघटमेकान्ते निक्षिप्य स्वां जननीमिदमवोचत्।

यत्खल्वेवमम्ब जानीया आनन्दो नाम श्रमणो महाश्रमणगौतमस्य श्रावक उपस्थायकस्तमहं स्वामिनमिच्छामि। शक्ष्यसि तमम्ब आनयितुम्।

सा तामवोचत्। शक्ताऽहं पुत्रि आनन्दमानयितुम्। स्थापयित्वा यो मृतः स्याद्यो वा वीतरागः। अपि च राजा प्रसेनजित् कौशलः श्रमणगौतममतीव सेवते भजते पर्युपासते। यदि जानीयात्सोऽयं चण्डालकुलस्यानर्थाय प्रतिपद्येत। श्रमणश्च गौतमो वीतरागः श्रूयते। वीतरागस्य मन्त्राः पुनः सर्वमन्त्रानभिभवन्ति।

एवमुक्ता प्रकृतिर्मातङ्गदारिका मातरमिदमवोचत्। स चेदम्ब श्रमणो गौतमो वीतरागस्तस्यान्तिकाच्छ्रमणमानन्दं न प्रतिलप्स्ये जीवितं परित्यजेयम्। स चेत्प्रतिलप्स्ये जीवामि।

मा ते पुत्रि जीवितं परित्यजसि आनयामि श्रमणमानन्दम्।

अथ प्रकृतेर्मातङ्गदारिकाया माता मध्ये गृहाङ्गनस्य गोमयेनोपलेपनं कृत्वा वेदीमालिप्य दर्भान् संस्तीर्याग्निं प्रज्वाल्याष्टशतमर्कपुष्पाणां गृहीत्वा मन्त्रानावर्तयमाना एकैकमर्कपुष्पं परिजप्य अग्नौ प्रतिक्षिपति स्म। तत्रेयं विद्या भवति।

अमले विमले कुङ्कुमे सुमने। येन बद्धाऽसि विद्युत्। इच्छया देवो वर्षति विद्योतति गर्जति विस्मयं महाराजस्य समभिवर्धयितुं देवेभ्यो मनुष्येभ्यो गन्धर्वेभ्यः शिखिग्रहा देवा विशिखिग्रहा देवा आनन्दस्यागमनाय संगमनाय क्रमणाय ग्रहणाय जुहोमि स्वाहा।

अथायुष्मत आनन्दस्य चित्तमाक्षिप्तम्। स विहारान्निष्क्रम्य येन चण्डालगृहं तेनोपसंक्रामति स्म।

अद्राक्षीच्चण्डाली आयुष्मन्तमानन्दं दूरादेवागच्छन्तम्। दृट्वा च पुनः प्रकृतिदुहितरमिदमवोचत्। अयमसौ पुत्रि श्रमण आनन्द आगच्छति शयनं प्रज्ञपय।

अथ प्रकृतिर्मातङ्गदारिका हृष्टतुष्टा प्रमुदितमना आयुष्मत आनन्दस्य शय्यां प्रज्ञपयति स्म।

अथायुष्मानानन्दो येन चण्डालगृहं तेनोपसंक्रान्तः। उपसंक्रम्य वेदीमुपनिश्रित्यास्थात्। एकान्तस्थितः स पुनरायुष्मानानन्दः प्रारोदीद्। अश्रूणि प्रवर्तयमान एवमाह। व्यसनप्राप्तोऽहमस्मि न च मे भगवान् समन्वाहरति।

अथ भगवानायुष्मन्तमानन्दं समन्वाहरति स्म। समन्वाहृत्य संबुद्धमन्त्रैश्चण्डालमन्त्रान् प्रतिहन्ति स्म। तत्रेयं विद्या।

स्थितिरच्युतिः सुनीतिः। स्वस्ति सर्वप्राणिभ्यः।

सरः प्रसन्नं निर्दोषं प्रशान्तं सर्वतोऽभयम्।
ईतयो यत्र शाम्यन्ति भयानि चलितानि च॥

तद् वै देवा नमस्यन्ति सर्वसिद्धाश्च योगिनः।
एतेन सत्यवाक्येन स्वस्त्यानन्दाय भिक्षवे॥

अथायुष्मानानन्दः प्रतिहतचण्डालमन्त्रश्चण्डालगृहान्निष्क्रम्य येन स्वको विहारस्तेनोपसंक्रमितुमारब्धः।

अद्राक्षीत्प्रकृतिर्मातङ्गदारिका। आनन्दमायुष्मन्तं प्रतिगच्छन्तं दृष्ट्वा च पुनः स्वां जननीमिदमवोचत्। अयमसौ मातः श्रमण आनन्दः प्रतिगच्छति। तामाह माता। नियतं पुत्रि श्रमणेन गौतमेन समन्वाहृतो भविष्यति। तेन मम मन्त्राः प्रतिहता भविष्यन्ति। प्रकृतिराह। किं पुनरम्ब बलवत्तराः श्रमणस्य गौतमस्य मन्त्रा नास्माकम्। ये पुत्रि मन्त्राः सर्वलोकस्य प्रभवन्ति न तान्मन्त्रान् श्रमणो गौतम आकङ्क्षमाणः प्रतिहन्ति। न पुनर्लोकः प्रभवति श्रमणस्य गौतमस्य मन्त्रान् प्रतिहन्तुम्। एवं बलवत्तराः श्रमणस्य गौतमस्य मन्त्राः।

अथायुष्मानानन्दो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्।

एकान्तस्थितमायुष्मन्तमानन्दं भगवानिदमवोचत्। उद्गृह्ण त्वमानन्द इमां षडक्षरीविद्यां धारय वाचय पर्यवाप्नुहि। आत्मनो हिताय सुखाय भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानां हिताय सुखाय। इयमानन्द षडक्षरीविद्या षड्भिः सम्यक्संबुद्धैर्भाषिता चतुर्भिश्च महाराजैः शक्रेण देवानामिन्द्रेण ब्रह्मणा च सहांपतिना। मया चैतर्हि शाक्यमुनिना सम्यक्संबुद्धेन भाषिता। त्वमप्येतर्ह्यानन्द तां धारय वाचय पर्यवाप्नुहि। यदुत तद्यथा—

अण्डरे पाण्डरे कारण्डे केयूरेऽर्चिहस्ते खरग्रीवे बन्धुमति वीरमति धर विध चिलिमिले चिलोडय विषाणि लोके। विष चल चल। गोलमति गण्डविले चिलिमिले सातिनिम्ने यथासंविभक्त गोलमति गण्डविलायै स्वाहा।

यः कश्चिदानन्द षडक्षर्या विद्यया परित्राणं स्वस्त्ययनं कुर्यात् स यदि वधार्हो भवेत् दण्डेन मुच्यते। दण्डार्हः प्रकारेण प्रहारार्हः

परिभाषणया परिभाषणार्हो रोमहर्षणेन रोमहर्षणार्हः पुनरेव मुच्यते।

नाहमानन्द तं समनुपश्यामि सदेवलोके समारलोके सब्रह्मलोके सश्रमणब्राह्मणिकायां प्रजायां सदेवमानुषिकायां सासुरायां यस्त्वनया षडक्षर्या विद्यया रक्षायां कृतायां रक्षासूत्रे बाहौ बद्धे स्वस्त्ययने कृतेऽभिभवितुं शक्नोति वर्जयित्वा पौराणं कर्मविपाकम्।

अथ प्रकृतिर्मातङ्गदारिका तस्या एव रात्र्या अत्ययात् शिरस्नाताऽनाहता दूष्यप्रावृता मुक्तामाल्याभरणा येन श्रावस्तीनगरी तेनोपसंक्रम्य नगरद्वारे कपाटमूले निश्रित्याऽस्थात् आयुष्मन्तमानन्दमागमयमाना। नियतमनेन मार्गेणानन्दो भिक्षुरागमिष्यतीति।

अथायुष्मानानन्दः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत्। ददर्श प्रकृतिर्मातङ्गदारिकायुष्मन्तमानन्दम्। दूरत एव दृष्ट्वा च पुनरायुष्मन्तमानन्दं पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्तमनुगच्छति तिष्ठन्तमनुतिष्ठति। यद्यदेव कुलं पिण्डाय प्रविशति तस्य तस्यैव द्वारे तूष्णीभूता तिष्ठति आयुष्मन्तमानन्दमामन्त्रयमाणा।

ददर्शायुष्मानानन्दः प्रकृतिं मातङ्गदारिकां पृष्ठतः पृष्ठतः समनुबद्धां दृष्ट्वा च पुनर्जेह्रीयमाणरुपोऽप्रगल्भायमानरुपो दुःखी दुर्मनाः शीघ्रं शीघ्रं श्रावस्त्या विनिर्गम्य येन जेतवनं तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थाद्। एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत्। इयं मे भगवन् प्रकृतिर्मातङ्गदारिका पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्तमनुगच्छति तिष्ठन्तमनुतिष्ठति। यद्यदेव कुलं पिण्डाय प्रविशामि तस्य तस्यैव द्वारे तूष्णीभूता तिष्ठति। त्राहि मे भगवन् त्राहि मे सुगत।

एवमुक्ते भगवानायुष्मन्तमानन्दमिदमवोचत्। मा भैर्मा भैरिति। अथ भगवान् प्रकृतिं मातङ्गदारिकामिदमवोचत्। किं ते प्रकृते मातङ्गदारिके आनन्देन भिक्षुणा। प्रकृतिराह। स्वामिनं भदन्तमानन्दमिच्छामि। भगवानाह। अनुज्ञातासि प्रकृते माता-

पितृभ्यामानन्दाय। प्रकृतिराह। अनुज्ञातास्मि भगवन्ननुज्ञातास्मि सुगत। भगवानाह। तेन हि सम्मुखं ममानुज्ञापय त्वम्।

अथ प्रकृतिर्मातङ्गदारिका भगवतः प्रतिश्रुत्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिःप्रदक्षिणीकृत्य भगवतोऽन्तिकात्प्रक्रान्ता। येन स्वकौ मातापितरौ तेनोपसंक्रान्ता। उपसंक्रम्य मातापित्रोः पादान् शिरसा वन्दित्वैकान्तेऽस्थाद्। एकान्तस्थिता स्वकौ मातापितराविदमवोचत्। सम्मुखं मेऽम्ब तात श्रमणस्य गौतमस्यानन्दायोत्सृजतम्।

अथ प्रकृतेर्मातङ्गदारिकाया मातापितरौ प्रकृतिमादाय येन भगवांस्तेनोपसंक्रान्तौ। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते न्यषीदताम्। अथ प्रकृतिर्मातङ्गदारिका भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थाद्। एकान्तस्थिता भगवन्तमेतदवोचत्। इमौ तौ भगवन् मातापितरावागतौ।

अथ भगवान् प्रकृतेर्मातङ्गदारिकाया मातापितराविदमवोचत्। अनुज्ञाता युवाभ्यां प्रकृतिर्मातङ्गदारिकानन्दायेति। तावाहतुः। अनुज्ञाता भगवन्ननुज्ञाता सुगत। भगवानाह। तेन हि यूयं प्रकृतिमपहाय गच्छत स्वगृहम्।

अथ प्रकृतेर्मातङ्गदारिकाया मातापितरौ भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिःप्रदक्षिणीकृत्य भगवतोऽन्तिकात्प्रक्रान्तौ।

अथ प्रकृतेर्मातङ्गदारिकाया मातापितरावचिरप्रक्रान्तौ विदित्वा भगवान् प्रकृतिं मातङ्गदारिकामिदमवोचत्। अर्थिकासि प्रकृते आनन्देन भिक्षुणा। प्रकृतिराह। अर्थिकास्मि भगवन्नर्थिकास्मि सुगत। भगवानाह। तेन हि प्रकृते य आनन्दस्य वेशः स त्वया धारयितव्यः। सा आह। धारयामि भगवन् धारयामि सुगत। प्रव्राजयतु मां सुगत प्रव्राजयतु मां भगवान्।

अथ भगवान् प्रकृतिं मातङ्गदारिकामिदमवोचत्। एहि त्वं भिक्षुणि चर ब्रह्मचर्यम्।

एवमुक्ते प्रकृतिर्मातङ्गदारिका भगवता मुण्डा काषायप्रावृता। अथ भगवान् प्रकृतिं मातङ्गदारिकामेहि भिक्षुणीवादेन प्रव्राजयित्वा

धर्मया कथया संदर्शयति स्म समादापयति स्म समुत्तेजयति स्म संप्रहर्षयति स्म। येयं कथा दीर्घरात्रं संसारसमापन्नानां प्रतिकूला श्रवणीया। तद्यथा दानकथा शीलकथा स्वर्गकथा कामेष्वादीनवं निःसरणं भयं संक्लेशं व्यवदानं बोधिपक्षांस्तान् धर्मान् भगवान् प्रकृत्यै भिक्षुण्यै संप्रकाशयति स्म।

अथ प्रकृतिर्भिक्षुणी भगवता धर्म्यया कथया संदर्शिता समादापिता समुत्तेजिता संप्रहर्षिता हृष्टचित्ता कल्याणचित्ता मुदितचित्ता विनीवरणचित्ता ऋजुचित्ता ऽखिलचित्ता भव्या धर्मदेशितमाज्ञातुम्।

यदा च भगवान् ज्ञातः प्रकृतिं भिक्षुणीं हृष्टचित्तां कल्याणचित्तां मुदितचित्तां विनीवरणचित्तां भव्यां प्रतिबलां सामुत्कर्षिकीं धर्मदेशनामाज्ञातुं तदा येयं भगवतां बुद्धानां चतुरार्यसत्यप्रतिवेधिकी सामुत्कर्षिकी धर्मदेशना यदुत दुःखं समुदयो निरोधो मार्गः तां भगवान् प्रकृतेर्भिक्षुण्या विस्तरेण संप्रकाशयति स्म।

अथ प्रकृतिर्भिक्षुणी तस्मिन्नेवासने निषण्णा चतुरार्यसत्यान्यभिज्ञातासीत् दुःखं समुदयं निरोधं मार्गम्। तद्यथा वस्त्रमपगतकालकं रजसोपगतं रङ्गोदके प्रक्षिप्तं सम्यगेव रङ्गं प्रतिगृह्णीयादेवमेव प्रकृतिर्भिक्षुणी तस्मिन्नेवासने निषण्णा चतुरार्यसत्यानि अभिसमयति स्म तद्यथा दुःखं समुदयं निरोधं मार्गम्।

अथ प्रकृतिर्भिक्षुणी दृष्टधर्मा प्राप्तधर्मा विदितधर्मा अकोप्यधर्मा पर्यवसितधर्माधिगतार्थलाभसंवृत्ता तीर्णकाङ्क्षाविचिकित्सा विगतकथंकथा वैशारद्यप्राप्ताऽपरप्रत्ययाऽनन्यनेया शास्तुः शासनेऽनुधर्मचारिणी आजानेयमाना धर्मेषु भगवतः पादयोः शिरसा निपत्य भगवन्तमिदमवोचत्।

अत्ययो मे भगवन्नत्ययो मे सुगतः। यथा बाला यथा मूढा यथाऽव्यक्ता यथाऽकुशला दुष्प्रज्ञजातीया याहमानन्दं भिक्षुं स्वामिवादेन समुदाचार्षम्। साहं भदन्तात्ययमत्ययतः पश्यामि। अत्ययमत्ययतो दृष्ट्वा देशयामि। अत्ययमत्ययत आविष्करोमि। आयत्यां संवरमापद्ये। अतस्तस्या मम भगवन्नत्ययमत्ययतो जानातु प्रतिगृह्णातु

अनुकम्पामुपादाय। भगवानाह। आयत्यां संवराय स्थित्वा त्वं प्रकृतेऽत्ययमत्ययतोऽध्यागमः। यथा बाला यथा मूढा यथाऽव्यक्ता यथाऽकुशला दुष्प्रज्ञजातीया त्वमानन्दं भिक्षुं स्वामिवादेन समुदाचरसीति। यतश्च त्वं प्रकृतेऽत्ययं जानासि अत्ययं पश्यसि आयत्यां च संवरमापद्यसे अहमपि तेऽत्ययमत्ययतो गृह्णामि। वृद्धिरेव ते प्रकृते प्रतिकाङ्क्षितव्या कुशलानां धर्माणां न हानिः।

अथ प्रकृतिर्भिक्षुणी भगवताभिनन्दिता अनुशिष्टा एकाव्यपकृष्टाऽप्रमत्ता आतापिनी स्मृतिमती संप्रजाना प्रहितानि विविक्तानि विहरति स्म। यदर्थं कुलदुहितरः केशानवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धयागारादनागरिकां प्रव्रजन्ति तदनुत्तरब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्योपसंपद्य प्रवेदयते स्म। क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीति।

Sahitya Akademi is the National Academy of Letters set up by the Government of India in 1954. It is an autonomous body whose policies are laid down by a General Council which consists of representatives of the various Indian languages, States and Universities. Its President is Sri Jawaharlal Nehru and Vice-President Dr. Zakir Husain.

The Akademi's programme is directed to fostering and coordinating literary activities in the Indian languages, though some works of scholarly and informative nature are also published in English.

A comprehensive Anthology of Sanskrit Literature in seven volumes, called SAHITYA RATNAKOSA, is one of the series sponsored by the Sahitya Akademi for publication. Of these, the volume covering the Epics and the Puranas, edited by Dr. S. K. De and Dr. R. C. Hazra under the title PURANETIHASA SANGRAHA, has already been published. The present volume is the next in the series. Other volumes in press or under preparation are :

VEDAS, BRAHMANAS AND SUTRAS
Ed. by Acharya Viswa Bandhu

JAINA SANGRAHA (Jaina Texts)
Ed. by Dr. Hiralal Jain

CLASSICAL LITERATURE
Part I Ed. by Dr. V. S. Agarwala and
Part II Ed. by Dr. V. Raghavan

ABHILEKHA SANGRAHA (Inscriptions)
Ed. by Dr. B. Ch. Chhabra

SUBHASITAS
Ed. by Dr. V. Raghavan and
Prof. K. A. S. Iyer